मुक्त इति । धत्थतित्थडित्थडितकिता खदेङ् खदेङ् गुरुखेन्दु खेण्डझत्थित्थित्थ-न्धित्थां विधातव्यः । एवं वितस्तमार्गगणे लमकरवर्जिताः प्रहाराः स्युः । ऊर्ध्वमार्गेण विशेषो कार्या(यं)श्च गोमुख्याः । खगमत्थिमटटघेण्डाखुखुणं खरखेण्डां खेदुङ् खुणुमां दुणकितिकिन्तिकिट्टिमां खुखुणुद्धेघे घोघा विधातव्या ।

इदानीं गोमुखीवाद्यम् । डेणघेण्डणखुखुन्धुलघुदुलेङ् घटमटटाङ् दुणुघुणांत्थि घटंघिटिमां कुकुटाङ्ङुणुघेङ्किदिमाङ् घे घे खो खों च गोमुख्याः ॥१४॥

ये त्वालिप्तसमुत्थाः सर्वैर्मार्गैस्तु विधातव्याः ।
ग्रहणाक्षरसन्धानेऽप्याद(दि)मृदङ्गाद् ग्रहो भवति ॥१५॥

एतेषां तु प्रवक्ष्यामि दर्शनानि यथाक्रमम् ।
चतुर्णामपि मार्गाणामक्षरग्रहणं यथा ॥१६॥

घृङ् वृङ् घट्टघङ् मत्थिटत्थिमटामटत्थिदिङ्मनघेङ् क्लङ्क्लेङ् क्घिकाङ् त्वड्डिते वाद्यम् ।

मद्रा तकिता धृङ् वृङ् स्रो किटि घेडाङ् गंत्थि किटिकेत्था यकुताकितां किरटामिति संयोगो वितस्तेस्तु स्रोमाङ् गुदुघेङ् घेघेघेण्डां घेघेटद्वमां ।

आलिप्ते संयोगे कार्योऽ वादने तज्ज्ञैः ॥

घैघंटत्थिकटांगुदुघेङ् घेटां घेण्डां धिमितित्थिधंकेसरेघेगघे णोणोणमिति वैष गोमुख्याः उक्ता मार्गाः ।

एतेषां पुष्कराणां त्रिविधः प्रचारः । समो विषमः समविषम इति । वामोर्ध्वगयोर्वामसव्ययोरड्डितामार्गेऽपि कार्यः । समप्रचारस्त्वालिप्ते वाद्यकरणे तु वाध्वय(ग)सव्यानां ग्रहणे वामस्तु कर्तव्यः । सव्योर्ध्वगमनानां सव्यो विषमप्रचारे तु ॥१७॥

एवं स्वस्तिक योगाद् द्वाभ्यामपि यद् भवेत्तु हस्ताभ्याम् ।
माने वितस्तिसंज्ञे प्रहते विषमः प्रचारः सः ॥१८॥
स्वच्छन्दकस्तु करयोः शेषः प्रहतेषु मार्गकरणेषु ।
अड्डितगोमुखयोगात् समविषमो हस्तसञ्चारः ॥१९॥

शृङ्गारहास्ययोर्वाद्यं योज्यं तथाड्डिते मार्गे ।
वीराद्भुरौद्राणां वितस्तमार्गेण वाद्यं स्यात् ॥२०॥

करुणरसेऽपि च कार्यं वाद्यं चालिप्तकरणमार्गेण ।
बीभत्सभयानकयोस्तथैव नित्यं हि गोमुख्याः ॥२१॥

रसत्वभावयोगं दृष्ट्वाऽभिनयं गतिप्रचारं च ।
वाद्यं नित्यं कार्यं यथाक्रमं स्थानसंयोगात् ॥२२॥

एतत् प्रहतविधानं कार्यं मार्गाश्रिते रसैः सम्यक् ।
वक्ष्याम्यतश्च भूयो दर्दुरपणवाश्रितं वाद्यम् ॥२३॥

तत्रातिवादितं स्यात् मुखानामप्रतो यत्र ।
यस्त्वनुगतं मृदङ्गत(ङ्गं)मृदङ्गादनुवादितमुच्यते तु तद्वाद्यम् ॥२४॥

समवादितमृदङ्गैर्ज्ञेयं साम्येन यद् वाद्यम् ।
कखगवं पणवमुखां दोह्लां ब्रूहुलाम् ।
एते वर्णा नित्यं पणववाद्ये प्रयोक्तव्याः ॥२५॥

किरिखिण्डां थोंणोथोत्रहुलाकिरिकिण्डां गोणोणाणाश्च किरिकण्डां माटामटत्थि टे टे दोण्णां पणवाद्यं तस्य प्रहतं कार्यं कनिष्ठानामिकाग्रैणैव ॥२६॥

प्रशिथिलवञ्चितकक्ष्ये पणवे कङ्कार एकप्रकारस्तु ।
तथैं(था)न्ततः प्रहारः पणवे कार्यः प्रशिथिल(लं)वक्ष्ये ॥२७॥

कखररकृतः प्रहारः सोच्छवासे तु पणवे विधातव्याः(व्यः) ।
शेषा भ्रान्तकरणसंयोगात् संयोगकृता विधातव्याः ॥२८॥

धोकारस्तु स्वारजे पणवे कक्ष्याञ्चिते तु संभवति ।
णैणकरो युक्तो ह्ल इति पणवप्रकारः स्यात् ॥२९॥

तिर्यग्गृहीतवादननखवर्तितमिष्यते प्रहारोऽयम् ।
कुहुलां कुहुलां क्रेमससिन्धिः कुहुलामितीत्थं प्रकारः स्यात् ॥३०॥

एवं च सङ्करकृताः प्रहाराः शुद्धाः प्रकीर्तितास्तज्ज्ञैः ।
दर्दुरपणवमृदङ्गैर्मिश्रितवाद्यं प्रवक्ष्यामि ॥३१॥

त वर्गिकाभावं केचिदिच्छन्ति मिश्रितं केचित् ।
केचिद् युगपत्करणं केचित् पर्यायकरणं तु ॥३२॥

एकैकसम्प्रयुक्ता वर्गानुगतास्तथैव सम्प्रयोक्तव्याः ।
घेंता कथं कुहुलां तकिता मृदङ्गेषु ॥३३॥

अथ दररे दङ् द्ररेङ् कुहुलां मटंथि पणवे च ।
थंमंटंहिभं कुहुलां मटत्थि देङ् वेङ् विमिश्रितस्तु ॥३४॥

एभ्यो येऽन्ये शेषा न मिश्रा एवं नित्यशः कार्याः ।
पूर्वेऽपि च मिश्रत्वं व्रजन्ति सर्वे यथायोगम् ॥३५॥

अथ युगपत् करणं कुहुलाणणां खुखुणोखेद्रोमादोण्णा ।
थथोघौत्थि द्वे योज्यं पणववाद्यम् घ(घु)यंकृतं च ।
क्रमशः करणं परिवादने के(दके) न कर्तव्यम् ॥३६॥

भटभेभेघोघोणाणकिरिणि किण्णाकृतं चेति ।
पणवस्याचारबन्धे कार्यं धाखुखुणेति वाद्यत्रयम् ॥३७॥

भूयः कृतं च प्रतिकृत(तं) मार्दङ्गिकदार्दुरिकाभ्यां तु ।
यद्वत् कुर्यात् समुखं प्रहारजातं गतिप्रचारेषु ॥३८॥

अनुगच्छतमक्षरवृत्तं तदेव वाद्यं तु पणवेन ।
न हि चित्रं कर्तव्यं गतिप्रचारेषु वाद्य(दन)मनन्तज्ञैः ॥३९॥

समसहिं तत्र हि तन्न लक्ष्यते पादसञ्चारे ।
उपरिकरणं यथेष्टं कर्तव्यं पणवे मृदङ्गे च ॥४०॥

तद्वत् प्रहारकरणं मृदङ्गवाद्ये विधातव्यम् ।
प्रायेण सर्ववाद्येष्वादौ पणवप्रहाः प्रयोक्तव्याः ॥४१॥

वक्ष्याम्यतः परमहं वसृक् घेत्ततिता केसदेङ् ।
केसदेवेदेरेभिण्णतमिततिमत्थि ॥४२॥

इति दर्दुरे प्रहरः कार्यो मुक्ते निषण्णे च ।
कार्यस्तत्र णणण्णारेद्रेग्रेधिकित्थिदक्किक्किकरणे ॥४३॥

वामेन तु भित्यिकसं(लं) तत्त्ववृ(ष्ट)ष्टं(:)कराग्रेण ।
मुक्ते तमिति चैव निगृह्याशीघ्रकरणानुबन्धास्थितिरेव हितकं स्यात् ॥४४॥

इति दर्दुरे प्रहारे वक्षाम्यूर्ध्वकरणजातम् ।
रूपं कृतं प्रकृति(प्रतिकृतं) प्रतिभेदो रूपशेषमोघश्च ।
षष्ठी(ष्ठं) वै प्रकृति(प्रति) शुष्के(ष्कं) ह्येते(तज्) ज्ञेयाः(यं) (हि) करण(र)णा(ण)जातम् ॥४५॥

तत्र रूपं नाम विहस्तकरणकरणम् । यथा ।
गंखुखुणखुघंक्रमंथिमत्थेत्तरधयं घन्तिमेंथिघेण्डां ।
करगुडरणंकिटिउंखेघडंचेघडं घेक्खमिति रूपम् ॥४६॥

प्र(ति)कृतं नाम यत्रैकं करणं त्रिपुष्करमप्युद्भावयति । यथा । थंखुवण खुं क्रमत्थि वर्गेरघटां घटं त्थिधक सां गुदुं घं कुहलां ह्लां दोघोघोणा इति ॥४७॥

कृतप्रतिकृताख्यं प्रतिभेदो नाम युगपत् कृते करणे मृदङ्गानां यदुपरिकरणेन गच्छति । यथा । घोघोणाखोकुहुलालणाणात्थि कटामटात्थिट-धिघेण्टाम् ।

एभिः करणविशेषैः प्रतिभेदो नाम विज्ञेयः ॥४८॥

विरूपशेषं नाम विरामकृतैः । यथा । खुखुण्णाणोमटघेंघेण्टा मदघेण्टामत्थि आंधोमिति वाद्यं रूपशेषं तु ॥४९॥

प्रतिशुष्कं नामानुस्वारो मार्दङ्गिकपाणविकदार्दुरिकाणाम् । यथा घटमटत्थिदुणघेङ् किटिघेङ् घोङ् घोण्डा घोणं घोण खोखो खेकुट्टकुट्टु किटकिट वखोत्थिणणत्थि ॥५०॥

चतुष्काख्ये सर्वभाण्डे विरामे द्रुतपाणिलयो नद्यघोवा(व)दोघः । यथा । थंकिटिमंथिवठिकिटिघिटि घेङ् घेण्टाण्टाणं घोण घोण घट घटगुदुघेङ् गंघेतिरिण-गेगं थो थों तथो घघु ॥५१॥

करणानां समायोगं करणेषु विधीयते ।
अनेन (नैव) विधानेन योज्यं वाक्करणं बुधैः ।
यतिन(र्ना)म समा श्रोतोगता गोपुच्छचे(जे)ति च ॥५२॥

यतिपाणि(णी)नां त्रिविधः संयोगः : स च त्रिप्रकारो भवति । यथा । राद्धा(द्धं)विद्धां(द्धं) शय्या(म्या)गतम् । एवम् ।

त्रिप्रकारः संप्रयोगः करणेषु विधीयते ।
अपपाणिस्तु यत्र स्यात् तथा चैव स्थिता लयाः ॥५३॥

गोपुच्छा च यतिर्वाद्यं तद्वै शम्यागतं भवेत् ।
यथाऽवगीतिप्राधान्यं मार्गश्चैव च दक्षिणः ॥५४॥

अत्युक्त(त्त)मेषु पातेषु वाद्यं शय्या(म्या)गतं भवेत् ।
स्रोतोगता यतिर्यत्र लतो मध्यं तथैव च ॥५५॥

समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ।
स्थित्ताल्लयात् प्रभृत्येषा प्रमाणं सम्प्रवर्तते ॥५६॥
कार्यहानिः कुलानां च शेषेष्वन्येषु पाणिषु ।
यथाक्रमं विकर्तव्या नाट्ययुक्तिमवेक्ष्य च ॥५७॥

तिस्रो मार्जना नाम ।
मायूरी ह्यर्धमायूरी तथा कार्मारवी पुनः ।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥५८॥
गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
ऊर्ध्वगे मध्यमश्चैव मायूर्यश्च स्वराश्रयाः ॥५९॥
वामके पुष्करे षड्ज ऋषभो दक्षिणो तथा ।
धैवतश्चोर्ध्वगे कार्यं अर्धमायूरकाश्रयाः ॥६०॥
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वगे कार्याः कार्मारव्याः स्वराश्रयाः ॥६१॥
एतेषामनुवादी तु जातिरागस्वरान्विताः(तः) ।
आलिङ्गे मार्जनं प्राप्य निषादस्तु विधीयते ॥६२॥
मायूरी मध्यमग्रामेऽप्यर्धा षड्जं तथैव च ।
कार्मारवी च कर्तव्या साधारणसमाश्रयाः(या) ॥६३॥
स्वरा ये स्थायिनो यान्ति श्रुतिसा(धा)रणाश्रयाः ।
त एव मार्जनं कृत्वा शेषाः सञ्चारिणः स्मृताः ॥६४॥
वामोर्ध्वगाभ्यामाहार्या कार्या वै लेपनं स्वराः ।
शैथिल्यादायतत्वाच्च कार्यस्त्वालिङ्गकान्तिके· ॥६५॥
शैथिल्यं च यतं चैव वर्धापीडनमार्दवात् ।
एवं स्वरोद्भवः कार्यो मार्जनासु प्रयोक्तृभिः ॥६६॥
मार्जनं तु मृदा कार्यं वामगोर्ध्वगयोस्तथा ।
लक्षणं मिश्रिकायास्तु गदतो मे निबोधत ॥६७॥
निःशर्करा निःसिकता निस्तृणा निस्तुषा तथा ।
न पिच्छिला न विशदा न क्षारकटुका तथा ॥६८॥

नावदाना(नवाकृष्टा)न चाम्ना(म्ला)ना न वि(वि)रक्तदा ।
मृत्तिकालेपनं ह्येषां यथाकार्यं तु मार्जनम् ॥६९॥

नदीकूलप्रदेशस्था श्यामा या मृत्तिका भवेत् ।
तोयाव(प)सरणश्लक्ष्णा तया कार्यं तु मार्जनम् ॥७०॥

बहुका या(ह्य)वदाता तु कृष्णा गुर्वी न च स्थिरा ।
सतुषा न स्वरकरी श्यामा यत्र न दृश्यते ॥७१॥

तत्र गोधूम(चू)र्णं वा यवचूर्णं च दापयेत् ।
यवगोपुच्छचूर्णस्तु(न्तु) कदाचिदुपभु(यु)ज्यते ॥७२॥

एकस्तस्य तु दोषः स्यादेकस्वरकरो भवेत् ।
एवं तु मार्जनायोगाच्छ्यामा स्वरकरी भवेत् ।

त्रिसंयोगस्य वक्ष्यामि लक्षणं द्विजसत्तमाः ॥७३॥

त्रिसंयोगो नाम गुरुसञ्चयो लघुसञ्चयो गुरुलघुसञ्चय इति । तत्र गुरुसञ्चयो नाम गुरुस्थितलयवृत्तम् । यथा । त्थितटां तकितां तकिटां घतित्ति मत्ति सतथीत्थं घटमथिमावेङ् घेण्टासटथामेवं गुरुलघु स्यात् ॥७४॥

लघुसञ्चयो नाम लघुद्रुतलयप्रवृत्ते यथा । घटमटघटमत्थिमटात्थिघटघट-दुकते लय(घु)संचय इति संयोगा ज्ञेया मृदङ्गवाद्यप्रयोगज्ञैः । (त्रि) प्रकृतिर्नाम तत्त्वमनुगतमोघश्चेति ॥७५॥

अक्षरसदृशं वाद्यं पदवर्णसमं तथैव प्रवृत्तम् ।
समं सुविभक्तकरणयुतं तत्त्वं वाद्यं विधातव्यम् ॥७६॥

समपाण्यप(व)पाणियुतं स्फुटप्रहारकरणानुगम् ।
वाद्यं पाण्यं भवेदनुगतं च नैककरणाश्रयम् ॥७७॥

(उ)पर्युपरिपाणि(समं) द्रुतलयं च (विज्ञेयम्) ।
आविद्धकरणबहुलं वाद्यं योज्यं बुधैरोघम् ॥७८॥

सर्वस्यैव तु वाद्यस्य ह्यष्टौ साम्यानि भवन्ति ।
अक्षरसमं तालसममङ्गसमं लयसमं च ।
न्यासाव(प)न्यासममं पाणिसमं चेति विज्ञेयम ॥७९॥

यद्वृत्तं तु भवेद्गानं गुरुलघ्वक्षरान्वितम् ।
तद्वृत्तं तु भवेद्वाद्यं तदक्षरसमं स्मृतम् ॥८०॥

ध्रुवाणां ग्रहमोक्षे तु कलान्तरकलासु च ।
यथा(द)ङ्गं क्रियते वाद्यं तदङ्गं सममुच्यते ॥८१॥

यत्प्रमाणं भवेद्गानं कलाकालप्रमाणतः ।
तत्प्रमाणं तु यद् वाद्यं तद्वै तालसमं भवेत् ॥८२॥
सम(मा) स्रोतोगता वापि गोपुच्छा च यतिर्यथा ।
यद्विधं तु भवेद्वाद्यं तद्वै यतिसमं भवेत् ॥८३॥

व्या(न्या)सान्व(प)न्यासयोर्गस्तु स्वराणां हि यथा भवेत् ।
वंशवैणोद्भवं वाद्यं न्यासाव(प)न्यासजं तथा ॥८४॥
समपाण्युपपाण्यो(ण्यु)क्तं तथैवोपरिपाणिजम् ।
गीतानुगं च यद्वाद्यं स्मृतं पाणिसमं तु तत् ॥८५॥

अष्टादशजातिकमिति यदुक्तं तदनुव्याख्यास्यामः । यथा । शुद्धा एकरूपाऽऽदेशा गुर्वाऽऽदेशरूपा पर्यायो(या)विष्कम्भः पर्यन्त आरम्भो(म्भः) पाष्णिसमता(मस्ता) वुष्करकरणा ऊर्ध्वगोष्ठिका उच्चिन्तिता एवं वाद्या मृदङ्गपणवा अवकीर्णा ग्रर्धावकीर्णा सम्प्लवा विधूतमिति ॥८६॥

एतासां जातीनां लक्षणमभिव्याख्यास्यामः । तत्र ।
एकाक्षरं व्यक्षरं वा यद् वाक्यं(द्यं) सार्वमार्गिकम् ।
भवेत् करणयोगे तु सा शुद्धा नामतो यथा ॥८७॥

थखोखोथक्वामेभिर्जात्यक्षरैः समायुक्ता । सा शुद्धा विज्ञेया मध्यस्त्रीणां भवेज्जातिः ॥ गोमुखीमड्डिका(ता)लिप्तौ वितस्तं वाश्रिता(तां) यदा । वादयन्ति । तथैकैक एकरूपा हि सा यथा ॥ द्रिङ् घोङ् दोङ् धोंङ् घेघेमेङ् ।

अड्डितमार्गाक्षरैः समायुक्ता सा त्वेकरूपा जातिर्नृत्ते गीतविधानतः कार्या सर्वास्वपि प्रकृतिषु प्रयोज्या । सा स्थिताय(या) द्रुता वापि देशं कालमवस्थां ज्ञात्वा मध्ये विनियोज्या । सर्वात्ये (ण्या) ता(तो)द्यानि यत्रैकं करणं भावयन्ति हि ॥८८॥

मृदङ्गवाद्यानुगमादेकरूपा तु सा स्मृता ।
अड्डितमार्गविभक्ता सम्भोगकृते भवति शृङ्गारे ॥८९॥

देशानुरूपजातिस्थितिलयवृत्तं(युक्ता) च कर्तव्या ।
यथा मीमत्थमम्मत्थिकिमा एभिर्जात्यन्तरैः समायुक्ता ॥९०॥

देशानुरूपजातिशृङ्गारे चोत्तरे स्त्रीणाम् ।
वामोर्ध्वगप्रवृत्ता वाद्याक्षिप्त्वा(प्ता) चतुष्टययुक्ता ॥९१॥
उपदेशादपेतरूपा करुणरसे सा भवेज्जातिः ।

यथा—

घेद्राङ् घेघेमेभिर्जात्यक्षरैः समायुक्ता ॥९२॥
देशादपेतरूपा सा कार्या वाद्ययोगेषु ।
पर्यागच्छति पूर्वं यस्मिन् सिद्धैस्तु तं करणजातम् ॥९३॥
त्रिविधेऽपि च लययोगे पर्याया नाम सा जातिः ।

यथा—

घेदोङ् घेदोङ् गुदुघङ् प्राया वामोर्ध्वगमे वामहस्तसञ्चारा ।
पर्यायकृता जातिर्वीराद्भुतरौद्रयोगेषु ॥९४॥
गुरुयुग्मं लघुयुग्मं तथैव च गुरुलघुनी चैव लघुश्चैव ।

यथा—

धिङ् माङ् घटघेङ् गुदुघेङ् दघेङ् दघेङ् मात्थिमेत्थम् ।
विष्कम्भाख्या जातिः शृङ्गारे चोत्तमस्त्रीणाम् ॥९५॥
एकैकाक्षरयोगाद् यद् वाद्यं सर्वमार्गसंयुक्तम् ।
पर्यस्ता क्रमहस्ता जातिः समहस्तविचारसंयुक्ता ॥९६॥
आकाशे र(थ)विमानऋषिविद्याधरभुजङ्गमादीनाम् ।
चरिते गतिविन्यासेऽथ धा(रा)यां चैव पर्यस्ता ॥९७॥

यथा—

घेङ् ताङ् घेङ् ताङ् देह्लामेभिर्जात्यक्षरैः समायुक्ता ।
पर्यस्ता जातिर्वै साऽधमपुरुषेषु कर्तव्या ॥९८॥
अपपाणिकरयुक्तमभ्यादेण्(क्ता ह्यादौ) मध्यमलयेन न यत्तुल्यम् ।
आरम्भं . तं विद्यादन्तेवासि श्रुतं यस्याः ॥९९॥

यथा—

मगठं खुखुकिटां एभिर्जात्यक्षरैः समायुक्ता ।
अधमस्त्रीणां योज्या संरम्भा नाम वै जातिः ॥१००॥
ऊर्ध्वाङ्गदक्षिणैर्मुखे क्षिप्ता प्रभूता वितस्तमार्गे तु ।
पार्ष्णिसमस्ता जाति कार्याः शृङ्गारहास्यगतौ ॥१०१॥

तत्स्थिकटमत्स्थिकरणैः सपार्ष्णिनिपीडैः ।
चन्द्रांशुघेन्द्रडिताङ् पार्ष्णिः समस्तः पुनर्जातिः ॥१०२॥

स्थितिलयगतिविन्यासे शृङ्गारे भवति योत्तमप्रकृतौ ।
धीरोत्तमपुरुषाणामन्येषां दानवादीनाम् ॥१०३॥

स्वह(स्व)स्तिकहस्तविचारा सवं(वं) मार्वङ्गप्रहारसंयुक्ता ।
सा त्रिलयवाद्ययुक्ता दुष्करकरणा भवेज्जातिः ॥१०४॥

यथा—

दुणदुणदुणकिंकधिमघेङ्मदत्स्थिदुधकिटिघेङ् ।
एभिर्जात्यक्षरयोगैर्दुष्करकरणा भवेज्जातिः ॥१०५॥

दैत्येन्द्रभुजगराक्षसपिशाचगन्धर्वगुह्यकादीनाम् ।
गतिविन्यासे कार्या दुष्करकरणा भवेज्जातिः ॥१०६॥

ऊर्ध्वाङ्गदक्षिणमुखो(त्) क्षिप्तप्रहिता वितस्तमार्गा च ।
अङ्कोर्ध्वगप्रवृत्ता दक्षिणवामप्रवृत्ता च ॥१०७॥

प्रावेणान्तर्मार्गा वितस्तमार्गाश्रया तु दिव्यानाम् ।
अविलृङ् धृङ् धृङ्प्राया जातिरियमूर्ध्वकोष्ठा स्यात् ॥१०८॥

सर्वैर्मार्गैः समुद्धृत्य यद्वाक्यं करणं भवेत् ।
उच्चित्तिकां विजानीयाद् गूढशृङ्खलिकाकृत(ता)म् ॥१०९॥

यथा—

केत्तां केत्तां गदितामेभिर्जात्यक्षरैः समायुक्ता ।
राज्ञां स्वभावग(मने)जातिः कार्या वितस्तिकृता ॥११०॥

गोमुख्यक्षरसहिता सर्वमृदङ्गप्रहारसंयुक्ता ।
कुहकाभिनये योज्या वैलाम्बिकदृष्टलिङ्गेषु ॥१११॥

यथा—

घेण्डाण्डादोरकिता घेङ्मटत्स्थि घटगुदुघे ।
एभिस्त्वक्षरयोगैरेवाऽऽवाद्या(वं वाद्ये) भवेज्जातिः ॥११२॥

वामनविह्वलखञ्जस्नू(ञ्जेषू)धाङ् गाघे च(गद्यहतवादाम्) ।
गद्यहतवादां(एवं) वाद्य(द्या)जातिस्त्वेषां गमने तु कर्तव्या ॥११३॥

पृथिवी वादितं यत्र पर्वतोऽन्येषु दृश्यते ।
मृदङ्गपणवादीनां सा जातिः(नां जाति) सा माजि(र्जि)की यथा ॥११४॥

घ्रोंघ्रोंठोंठोमेभिर्जात्यक्षरैः समायुक्ता ।
मृदङ्गपणवा(दी)नां स्त्रीणामेषा(भवेज्) जातिः ॥११५॥

अवतीर्णं यद् वाद्यं त्रिगुणैर्वाद्यकरणैर्मृदङ्गानाम् ।
दर्दुरपणवोपगमादवकीर्णा नाम सा जातिः ॥११६॥

यथा—

केन्तां केन्तां केन्तामेभिर्जात्यक्षरैस्तु सम्प्र(सं)युक्ता ।
गोमुखमार्गे जातिः सा चैव (वं)गुणा विधातव्या ॥११७॥

अर्धकीर्णविविधैः करणैरिह मार्गयोगलघुयुक्तैः ।
दर्दुरपणवमृदङ्गैरर्धार्घ(घं)वादने कार्यम् ॥११८॥

यथा—

थंगदघेण्डां सेन्द्रामेभिर्जात्यक्षरैस्तु संयुक्ता ।
सम्प्लवमिति विज्ञेया कर्तव्या वानरैः करणैः ॥११९॥

दिव्यैर्नानाकरणैश्चित्रैः समृदङ्गप्रहारसंयुक्तैः ।
स्वाभाविकोत्तमगतौ विधूय जातिर्विधातव्या ॥१२०॥

यथा—

तिक्षिसां मटस्थि कणं कुक्राभ् ।
एभिस्त्वक्षरयोगैर्विधूतजातिर्विधातव्या ॥१२१॥

एता गति प्रचारेषु विज्ञेया जातयो बुधैः ।
याश्च नोक्ता मयाबाऽ(चा)स्मिन् ता ग्राह्या लोकतोऽर्थतः ॥१२२॥

एवमेतेन विधिना कर्तव्यं वादनं बुधैः ।
गतिप्रचारे गीते च दशरूपे तथैव च ॥१२३॥

सप्तरूपे विधाने च छन्दसा कारितेषु च ।
वाद्यं गुर्वक्षरकृतं तथार्धाक्षरमेव च ॥१२४॥

गतिप्रचारे कर्तव्यं गानसौम्यार्थदर्शनात् ।
तत्त्वं चानुगतं चैव तथौघं करणाश्रयम् ॥१२५॥

राज्ञां ललितभावत्वाद् योज्यं वाद्यं स्वभावजम् ।
तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतं भवेत् ॥१२६॥

तृतीये त्वौघसंज्ञं तु वाद्यं गतिपरिक्रमे ।
शेषाणां छन्दतश्चित्रं ध्रुवाणां सम्प्रयोजयेत् ॥१२७॥

अथ स्थितावकृष्टानां वाद्यं चानुगतं भवेत् ।
प्रावेशिकीनां कर्तव्यं तत्त्वं चानुगतं तथा ॥१२८॥

नैष्क्रामिक्यन्तरगतं कार्यं त्रिलयवादिना ।
द्रुतं प्रासादिकीनां च ध्रुवा पञ्चविधा भवेत् ।
एवं ध्रुवाणां कर्तव्यं वाद्यं प्रकरणाश्रयम् ॥१२९॥

यो मात्रांशविकल्पस्तु ध्रुवापादे भवेदिह ।
स तु भाण्डेन कर्तव्यस्तज्ज्ञैर्गतिपरिक्रमः(मे) ॥१३०॥

एवं गतिप्रचारेषु वाद्यं योज्यं प्रयोक्तृभिः ।
अथ ऊर्ध्वं प्रवक्ष्यामि ग्रहान् भाण्डसमाश्रयान् ॥१३१॥

शम्यातालग्रहाः केचित् तथाकाशग्रहाः पुनः ।
तत्र शम्याग्रहा ज्ञेया नित्यं दक्षिणपुष्करे ॥१३२॥

वामोर्ध्वगे ग्रहाश्चापि ज्ञेयास्तालग्रहा बुधैः ।
तर्जनीग्रहकाठिन्य(नित्य)मालिङ्गे परिकीर्तिताः ॥१३३॥

अथाकाशग्रहाः प्रोक्ता निष्क्रामे वा प्रयोजिताः ।
आसारितानित्यश(नि श)म्याद्यास्तालाद्यास्तु ध्रुवाङ्गजाः ॥१३४॥

लयं च न ग्रहं गानं तत्र स्यात् तर्जनीग्रहः ।
शीर्षकं चोद्धता चैव प्रदेशिन्या ग्रहाः स्मृताः ॥१३५॥

नत्कुटस्याड्डिका(तः)याश्च प्रादेशि(सादि)क्यास्तथैव च ।
सन्निपातग्रहा ज्ञेयास्तथैवैककला(लो)विधिः ॥१३६॥

आकाशग्रहका ज्ञेयाश्चतुर्वि(र्द्वि)कलयोगजाः ।
तथा चाङ्गनिबद्धानि गीतकानि यथाक्रमम् ॥१३७॥

एवमेते बुधैर्ज्ञेया ग्रहा भाण्डसमाश्रयाः ।
ताण्डवे सुकुमारे च वाद्यं वक्ष्याम्यतः परम् ॥१३८॥

अभाण्डमेक(कं)गानस्य परिवर्तं प्रयोजयेत् ।
तस्यान्ते सन्निपातस्तु कार्यो भाण्डग्रहो बुधैः ॥१३९॥

अथा(थवा) नृत्तशोभार्थमङ्गाङ्गं(ङ्ग)परिकी(व)र्तनम् ।
गीतकस्य प्रकर्तव्यं व(ल)यस्य परिवर्तनम् ॥१४०॥

यत्राभिनेयमङ्गं तु न वाद्यं तत्र योजयेत् ।
यत्राङ्गहारनृत्तं तु तत्र वाद्यं प्रयोजयेत् ॥१४१॥

यदा गीतवशादङ्गं भूयो भूयो निवर्तते ।
तत्राद्यमभिनेयं तु शेषं नृत्तेन योजयेत् ॥१४२॥

यद्वृत्तं तु पदं गाने तादृशं वाद्यमिष्यते ।
गीतवाद्यप्रमाणेन कुर्याच्चाङ्गविचेष्टितम् ॥१४३॥

वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरयोजितम् ।
मुखोपग(व)हनं कार्यं प्रकृष्टं वर्णतस्तथा ॥१४४॥

स्थितेऽल्पत्वं प्रहारं तु मध्येऽक्षरसमं तथा ।
कार्यं तु गीतके वाद्य(द्यं)द्रुते चोपरिपाणित(क)म् ॥१४५॥

समं रक्तं विभक्तं च स्फुटं शुद्ध(द्धं) प्रयोगजम् ।
नृत्ताङ्गग्राहि कालज्ञैर्वाद्यं योज्यं तु ताण्डवे ॥१४६॥

सनृत्तेषु प्रयोगेषु तत्त्वं ह्यनुगतं भवेत् ।
अनृतेषु प्रयोगेषु तत्त्वमोघं च वादयेत् ॥१४७॥

स्थिते मध्ये द्रुते चापि यथागानं तु वादयेत् ।
पदनृत्ताङ्गहारेषु कृतेन वै प्र(न प्र)क्रमेण तु ॥१४८॥

यो विधिर्गानवाद्यानां पदाक्षरलयान्वितः ।
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्ययोगतः ॥१४९॥

एतास्तु जातयः प्रोक्ता दश चाष्टौ च भाण्डजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रकारान् वाद्यसंश्रयान् ॥१५०॥

अथ प्रकाराः । चित्रं(त्रः) समं(मो) विभक्तं(क्तो) हीनं(छिन्नो) भिन्नं(छिन्नविद्धो) विद्धं (द्धो) (ऽनुपीडः) स्वरूपं(पः) स्वरूपानुगतम(तोऽ)नुगतः अ(सृतोऽ)नुस्मृतः(सृत)विच्युतो दुर्गः अ(र्गोऽ)वकीर्णः अ(र्णो)र्धावकीर्ण एकरूपः परिक्षिप्तः सञ्चि(साचीकृ)तः समलेखः चित्रलेखः सर्वसमवायः(यो) दृढ इति ॥१५१॥

तत्र ।

रचितादिभिः प्रयुक्तं चित्रैः करणैरनेकविधहस्तैः ।
त्रलयं त्रिपाणियुक्तं चित्रं वाद्यं बुधैर्ज्ञेयम् ॥१५२॥

दर्दुरपणवमृदङ्गैर्नानाकरणैस्तु यः सम्यक् ।
समयतिकालाङ्गयुतः स तु विज्ञेयः समो नाम ॥१५३॥

एकायनस्तथा यत्या यतश्च संस्थानसंविभक्तश्च ।
अक्षरपाणिलयेषु च विभक्तस्तु स्य (स विज्ञेयः) ॥१५४॥

वाद्यं तु त्रिलयं यत्र सहसा च विवर्धते ।
सर्वातोद्यप्रवृत्तं तु प्रकारश्छिन्न एव सः ॥१५५॥

अपपाणिमृदङ्गानां पणवोपरिपाणि च ।
भवतो यत्र वाद्ये तु छिन्नविद्ध इति स्मृतः ॥१५६॥

मृदङ्गकरणं वाद्यं पणवो वेधयेद् यदि ।
सूचीवेधैर्विचित्रैस्तु करणैर्विद्ध एव सः ॥१५७॥

विद्धानुविद्धये द्वाभ्यां (द्धं यद्वाद्यं) सर्वतोद्येषु दृश्यते ।
परस्परविरोधे तु अनुपीडस्तु संस्मृतः ॥१५८॥

विशुद्धवाद्यप्रकृतिः समतालकृतस्तथा ।
स्वरूपापगतं चै(तश्चै)व स्वरूप इति संस्मृतः ॥१५९॥

मुखः (खो दा) पणवो वापि पणवो दर्दुरोऽपि वा ।
तथानुयायादातोद्यं स्वरूपानुगतस्तु सः ॥१६०॥

अनुगद्य मृदातोद्यं गच्छेद् यत् स समं पुनः ।
श्रुतवत् समता वाद्ये तदाऽनुसृत उच्यते ॥१६१॥

एकैकानुगतं मा(गा)ढं वाद्यजातिसमन्वितम् ।
कृत्वाऽन्यजातिकं कुर्यात् तदाऽनुसृतविच्युतः ॥१६२॥

यत्र प्रचारविषमः(मं) सर्वमार्गप्रबोधनम् ।
अविभक्ताक्षकृतं तद् वुगं वाद्यमुच्यते ॥१६३॥

समवृत्तैर्मृदङ्गस्तु वाद्यते पणवैर्यदा ।
नानाविचित्रकरणैरवकीर्णस्तदा स्मृतः ॥१६४॥

द्रुता(तं)लयं समारुह्य पणवो दर्दुरोऽपि वा ।
अवधानोऽपि यत्र स्यादर्धकीर्णा तु सा सदा ॥१६५॥

सर्वातोद्यानि यत्रैकं करणं भावयन्ति च ।
समवृत्तपदान्येव एकरूप इति स्मृतः ॥१६६॥

पणवैश्चोदितं यत्र वाद्यमल्पमृदङ्गजम् ।
सुविभक्ताक्षरपदं परिक्षिप्तं तु(प्तस्तु) स स्मृतः ॥१६७॥
चित्रं हि करणं यत्र पदेनैकेन वाद्यते ।
नृत्ताङ्गहारानुगतं ज्ञेयं साचीकृतं तु यत् ॥१६८॥
कृत्वोपरिगतं वाद्यं पणवे(वो) दर्दरोऽपि हि ।
यत्रोदीक्षेत मुखान् समलेखस्तु स स्मृतः ॥१६९॥
चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः ।
क्रियते यत्र संरब्धैश्चित्रलेखस्तु स स्मृतः ॥१७०॥
सर्वमार्गकृतो यस्तु सर्वपाणिलयाश्रयः ।
विच्छिन्नश्च विभक्तश्च स सर्वसमवायकः ॥१७१॥
यस्तु मध्यलयोपेतः समः स विहिताक्षरः ।
गतिप्रचारविहितः प्रचारो दृढ एव सः ॥१७२॥
एवमेते प्रकारास्तु कर्तव्या नाट्यसंश्रया ।
गतिप्रचारे गीते च रसभावौ समीक्ष्य तु ॥१७३॥
एते प्रकारा जात्यश्च सर्वमार्गेषु ते स्मृताः ।
ते वं गतिप्रचारेषु शुद्धास्ते केवलाः स्मृताः ॥१७४॥

एतेषां प्रयोगमिदानीं वक्ष्यामि । तत्रोपविष्टैः प्राङ्मुखो रङ्गे कुतव(प)विनिवेशः कर्तव्यः । तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतव(प)-विन्यासः । रङ्गाभिमुखा मार्दङ्गिकपाणविकदार्दरिकेषु गायकनायिकावांशिक-वैणिकसहितेषु अ(ब)शिथिलायततन्त्रीबद्धस्तनितेष्वातोद्येषु यथाग्रामरागमूर्च्छानां मार्जनानुलिप्तेषु मृदङ्गेषूद्धाराया निपीडितेषु निगृहीतार्धनिगृहीतमुक्तप्रकारेषु दर्दरवादनमुख्यविन्यस्तहस्तैर्वादकैर्दैवतानामावाहनविसर्जनार्थं प्रथममेव त्रिसामः कर्तव्यः । स तु सर्वचराचरोत्पत्तिस्थितिप्रलयकर्तुर्ब्रह्मणो मुखाभिव्यक्तेन प्रथमेन साम्ना वामपार्श्वे चन्द्रं सम्प्रीणयति दक्षिणेन पन्नगान् अथान्तरेण जलसाम्ना मुनीन् । आग्नेयेन बृहत्साम्ना दैवतेन च ॥१७५॥

एवं प्रीणयते यस्माद् दैवतानि यथाक्रमम् ।
तस्मात् त्रिसाम विज्ञेयं त्रिसामत्वाद् बुधैरिह ॥१७६॥
एवं च श्रूयते यस्माद् ब्रह्माणं केशवं शिवम् ।
तस्मादेतत् त्रिसामं तु ऋषिभिः परिकीर्तितम् ॥१७७॥

चतुर्णामपि वेदानामादावोङ्कार उच्यते ।
तथात्र सर्वगीतानां त्रिसाम परिगीयते ॥१७८॥
त्रिप्रकारं त्रिलयकं तथा चैवाड्डिताश्रयम् ।
षट्कलं त्रिकलं चैव त्रिसाम परिकीर्तितम् ॥१७९॥
त्रिविधः साक्षरविधस्तु(धो) गुरुलघ्वक्षरान्वितम् ।
यकारश्च मकारश्च त्रिकैस्त्रिगुणितं भवेत् ॥१८०॥

तस्यैव चान्ते पूर्वरङ्गविधिमनुप्रासं छन्दोसमेनाक्षरसमेन च वाद्यं बहिर्गीतविधानवस्तुत्रितयं वर्तनीयम् । तत्र च सा नितम्बियोगं च तथानुगतं वाद्यं प्रायः प्रयोक्तव्यम् । वृत्ते वस्तुत्रिसाम्ना च प्रकृत्याहारोऽयं वर्तनं यो गीतिकावद् वाद्यं प्रवर्तते । तत्रादौ वामोर्ध्वगप्रचारयुतं पश्चादालिङ्गनविमर्दे-(र्द)नो गोपुच्छा यदि सामाद्यपि चित्रकरणयुतं चतुर्मार्गं विपञ्चीवाद्यं प्रवर्तयितव्यम् । पूर्वं भाण्डेनाभिव्यञ्जिते रङ्गे स्त्रीबालमूर्खावि(व)कीर्णे च रङ्गे कुतूहलमुत्पन्ना(त्पादना)र्थं भवति ॥१८१॥
अपि च ।

आचार्याः सममिच्छन्ति पदच्छेदं तु पण्डिताः ।
सुकुमारा(रं)स्त्र(स्त्रि)यश्चैव निकृष्टमितरे जनाः ॥१८२॥

तत्र भाण्डे ताण्डवप्रयोगमधिकृत्यावतरणकाले लघुपादसञ्चयैर्मार्दङ्गि-कैरङ्गुलिप्रचलप्रायं वाद्यं योज्यम् । तत्रान्तराभिमुखो गायकः । गायकस्य वामपार्श्वे वैणिकः । वैणिकस्य दक्षिणे मृदङ्गवादकः । गातुरभिमुखा गायकाः । नर्तक्यवतरणगीतान्ते सन्निपाता ज्ञेयाः । लास्यनृत्ताङ्गहारानुगतं वाद्यं करणधातुसंयोगमित्युच्यते । समं रक्तमित्यादि तत इदानीं वामोर्ध्वगप्रहारसंयुक्त-मालिप्तमार्गदेशकरसंश्रयं समुत्थापन्नन(पन)केन वाद्यं योज्यम् । यथा । दीर्घेङ् मतिखङ् मथांदेङ् धिविर्दि क्वं खुं खोकणे देघां केत्तां केत्तां किट घेङ् इति । पूर्वरङ्गलयपातनिर्दिष्टप्रयोगसमुत्थापनके वाद्यं योज्यमिति । तयोः परं यत् परिवर्तनं चतुर्मार्दङ्गिकं शुद्धजात्याश्रयं यथा प्रोक्तम् । खोखोणं खोखाणां थखोखोणा । एतदन्व्यैर्यंववाद्यं स्यात् । पुनः( : )स्त्री वान्या स्यात् । थोखोवोखो खकेणां घयेत्तां घ । नपुंसकपदे यथास्वरं खं दुर्मागि इति । चतुर्थकारप्रवेशे च वाद्यं तूत्थापनके चापकृष्टायामर्धमपि चार्यप्रहो यथा । घेघेत्तां घे खोखोङ्गो घणं

दोषां दों घ दो घ घ घे इति। शुष्कावकृष्टाया(यां) यथा। थो खो थो खे ख धोघेङ् णादम्यङ् खोघ्रोकेतांकखेखेणकसुगुकघेङ् गिणाणां खिखिखेङ् ताङ् खेङ् णं किटिकिटि घघेङ् घघेङ् कटुखुदुकं लवला खोखोखोखोखाध्रंकेटां माणिणणांमां किटिघणि इति। सन्निपातग्रहः(हो) यथा। वाभकरणे का खोणो दोदोकं मोकं दहेणणा घो धो धो घटमटत्थि खंघोखोखोखोकटकटभ्रं खेखाखों तिथि कटकटां घटकमत्थि घे खो मिथि णाणां किटिकिणां खकत्थमिति आलिप्तमार्गाश्रितं वाद्यम् ॥१८३॥

अतः परं महाचार्यवितस्तमार्गाश्रितं वाद्यम्। प्रदेशिन्या ग्रहो यथा। णणणखो मधुणां खोखोमत्थि तकितां तक्तितां किटिकितों किटिक्तितों खोखोमतितों मत्थित्र मतित्थं तिकिति केन्तां फेन्तां द्रेतां ततकेन्तांट घेतोन्द्रं केन्तां द्रान्तां किण्णां केन्तां मुद्रां धोध्रंकेसंध्रंध्राद्रांद्रा ध द्रे द्रां द्राघें द्राघें द्राघेङ् इति। केस(क्लेङ्)कोपक्षेपणात् सिद्धिः। एतावच्चतुरश्रम्।

पूर्वरङ्गविधाने भाण्डवाद्यं प्रयोजयेत्।

त्र्यश्रत्वे तदेव कलाव्यवहितं पुनश्च नाटकाद्येषु धीरोदात्त धीरोद्धतधीरां ललितप्रशान्तान चतुर्णां नायकानां गतिप्रचारेष्ववस्थासु निर्गतं वाद्यमुपदेक्ष्यामः तत्र ध्रं ध्रं ध्रं धाद्रं प्रायो वेदा(देवा)नां गतौ प्रयोज्यम्। घेन्तां प्रयोज(ज्यं)-राज्ञाम्। घाकेसं घट्ट घेङ् घेङ् घेङ् घेङ् घटित्थि टुन किटिति थिद्राणां णां - घ्र द्रां प्रायं मध्यमपुरुषो(षे) वाद्यम्। पुनरेव स्थितायां वाद्यविधानं वक्ष्यामि ॥१८४॥

त्रिकलं(ल) द्विकलैककलाश्चतुष्कलाश्चैव पातविन्यासाः।
तत्र तु साम्यं कार्यं भाण्डेन समं न गानेन ॥१८५॥
स्वस्थो गतिप्रचारो वाद्य(द्यं)त्रिकलश्च(लं च)तुष्कलं वापि।
(गति)लययतिविधानं समीक्ष्य तज्ज्ञैः प्रयोक्तव्यम् ॥१८६॥
न ह्येककला द्विकला वा ध्रुवाविरामा भवन्ति वाद्येषु।
तस्माद् भाण्डेन च कं(तं) साम्यं कार्यं न गानेन ॥१८७॥
सर्वत्र त्वरितगमनेषु पाताः पूर्वोक्ता ये गतिप्रचारेषु।
धृङ् धृङ् घेङ् घेङ् प्रायं तत्र च वाद्यं प्रयोक्तव्यम् ॥१८८॥
गो(गो)रथविमानयाने पक्षिच(ज)लाकाशजजडचि(वि)चलनात
कार्यं वाद्यं चतुष्केऽप्यन्यौन्यकदासिहतं वाद्यं ॥१८९॥

दुःखार्थिव्याधितशापक्लेशनिपतितेष्टजनविभवनाशवधबन्धव्रतनियमोपवासयुक्तेषु पूर्वलिप्तमार्गाश्रितमुत्थापनवाद्यं प्रयोज्यं स्यात् । दैत्यदानवयक्षराक्षसभूतपिशाचग्रहा दिंनिथाध्राङ् दुङ् वधसंयुक्तं घुट्टुकृतं तकेथोद्राम् इत्येवमादि करणैर्गतिवाद्यं प्रयोजयेत् । खञ्जविकलवामनकुब्जादीनां प्रवृत्तगमनेषु घेंतां कटकामिति वाद्यं प्रयोक्तव्यम् । यतिमुनिपाशुपतशाक्यादीनां दोखो विखिब्रुदुखेङ् कसनदोघन्तिकिती वाद्यं प्रयोक्तव्यम् । विदूषकोपधापन षण्डवर्षधरादीनां घें घें त्राणोण्णा दों ण्णा ण्णा ण्णामिति वाद्यं पुनश्चैव । अथ वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां ध्रं ध्रो द्राङ् द्रों धीङ् द्रोंणां खो खोणाम् इति वाद्यं प्रयोक्तव्यम् । अथ राज्ञां श्रयिधभिर्गोकं खु खु इति वाद्यं प्रयोज्यम् । अधमानां वेश्याशिल्पकारि(र)काणां नागरिकीयानां(काणां) धकुकुद्धिकिटमत्थियतिणंगोणां धो इति ॥१९०॥

एवं तावत् समासाभिहितं स्त्रीणामवस्थान्तरितानां च । एत एव पौरुषवाद्यविशेषाः । तस्मात् सामान्यतो हि भयक्लेशशोकक्रोधादयो विभावाः समुत्पद्यन्ते । तत्र भ(भा)वापेक्षं मार्गाश्रितवाद्यं योज्यं भवति ॥१९१॥

अपि च ।

जातिमार्गप्रकारैस्तु करणैरक्षरैस्तथा ।
वादयेद् वस्तु सङ्कीर्णं स श्रेष्ठो वादकः स्मृतः ॥१९२॥

अन्तरवाद्यानि च विप्रकारितं सिद्धग्रहणं परिच्छिन्नमिति । तत्रानुबन्धसंज्ञानामान्तरवाद्यम् । यथा खोखोणां खो घे इति पाठ्य(म्) । विप्रहारितः (तो) यथा । धद्रां छ खाखो इति ॥१९३॥

सिद्धिरपि वा ।

ऐश्वर्ये विस्मृते श्रान्ते वस्त्राभरणसंयमे ।
सिद्धिर्वाचैव कर्तव्या नानाकरणसंश्रया ॥१९४॥

सा च सिद्धिर्यथा मार्गकरणाश्रया कार्या चित्रकरणा पञ्चषट्कला । अथ परिच्छिन्नं सर्वभाण्डिकं द्रुतध्रुवासूयोपगमने गम्भीरधीरप्रहारमुद्धतं यथा पञ्चषट्कलं च तत्रोत्तमानां वितस्तभुजाश्रित घुं घु घु क स इति । अथोत्तमस्त्रीणामड्डितवाद्याश्रितं यथा । णण्णां खो खो णण्णामिति । अथाधमानां खण्डनं नत्कुटविषयं यथा । सं संकेत किटि किण्णामिति । अवस्थान्तरेषु पुनरेवार्धकृतं भविष्यति च । अथ वाद्यविरामे वाद्यं साधनकृते विरामे च वस्त्राहरणविनिपाते संयमनकाले । अथ

प्रत्यादिश्यां समपादो विभक्तकरणवाद्यं योज्यम् । द्रुतायामुपरिपाजिकरणम् । अजितायामपकृष्टसामे (मै) दसन्निपातकृतमिति ।

एवमेतत् प्रयोक्तव्यं वाद्यं गतिपरिक्रमे ॥१९५॥

अड्डितायां च णा खो खो ण द दे दे दे दे खो खो धुंण धुण् इति । अथ नत्कुटखञ्जयो(:) णण्णाखुखुणाण्णाण्णा खोणंण्णा ण्णा दे दे दे खो खो खो खो घे इति । अथोद्गात्यसम्भ्रमावेगामर्षार्थविस्मयोत्साहजो भोगाय तस्य यत् तदुद्धात्यं सम्प्रकीर्तितम् ॥१९६॥

मोक्षानिदानीमुपदेक्ष्यामः । तत्राड्डितद्रुताः भ्रां तिडि तिन्तां इति । असतस्थिताया घततामिति । अपकृष्टायां वघधमिति ॥१९७॥

एवमेते ग्रहा मोक्षा द्रुतपा(क्षा पा) त्राणां गदिता मया ।
निष्क्रामे च प्रवेशे च आक्षेपिक्यन्तरासु च ॥१९८॥

एवं तालकलास्वरा(र)ज्ञानेन मार्दङ्गिकेन भवितव्यम् भवति चात्र श्लोकः ।

अतालकमतालज्ञमशास्त्रज्ञमवादकम् ।
चर्मघातकमित्येवं प्रवदन्ति मनीषिणः ॥१९९॥

अनेनैव विधानेन योज्यं वाद्यं प्रयोक्तृभिः ।
अत ऊर्ध्वं प्रवक्ष्यामि आतोद्यानां तु लक्षणम् ॥२००॥

त्रिविधा(त्रिधा) क्रिया मृदङ्गानां हरीतक्यवाश्रया ।
तथा गोपुच्छरूपा च भवत्येषां स्वरूपतः ॥२०१॥

हरीतक्याकृतिस्त्वङ्क्या यवमध्यस्तथा स्वकः ।
आलिङ्गश्चैव गोपुच्छाकृतिरेषां प्रकीर्तितः ॥२०२॥

तालास्त्रयोर्ध्व(र्ध)तालश्च मृदङ्गा(ङ्गो)ङ्गिक इष्यते ।
मुखे तस्याङ्गुलानि स्युस्त्रयोदश चतुर्दश ॥२०३॥

ततो(थो)र्ध्वकश्चकर्तव्यश्चतुस्तालप्रमाणतः ।
मुखं तस्याङ्गुलानिस्युरष्टावेव समासतः ॥२०४॥

पणवश्चापि कर्तव्यो दीर्घत्वे शोडशाङ्गुलः ।
कृशो मध्या(ध्ये)ङ्गुलान्यष्टौ पञ्चाङ्गुलमुखं त(स्त)था ॥२०५॥

श्रोष्ठस्तस्य च कर्तव्यस्तज्ज्ञैरध्यर्धमङ्गुलम् ।
मध्ये तु सुषिरं तस्य चत्वार्येवाङ्गुलानि तु ॥२०६॥

दर्दरस्य शुभंकारो भवत्यष्टिमुखस्तथा ।
मुखं च तस्य कर्तव्यं घटस्य सदृशं बुधैः ॥२०७॥

द्वादशाङ्गुलविस्तीर्णं पीनोष्ठं च समासतः ।
अत उर्ध्वं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥२०८॥

न ज्वरोपगतं चर्म न च काकमुखाहव(वह)म् ।
न स्वेदोपगतं क्लिन्नं न च धूमादिदूषितम् ॥२०९॥

षड्भिर्दोषैर्विनिर्मुक्तं चर्म निर्वर्तितं गवाम् ।
देवताभ्यर्चनां कृत्वा ततः स्थाप्य महीतले ॥२१०॥

चित्रायामथवा हस्तेऽहनि पुण्ये शुभौ(भे) तिथौ ।
उपाध्यायः शुचिर्भूत्वा कुलीनो राजवर्जितः ॥२११॥

घनज्ञो गीततत्त्वज्ञो मधुरो नियतेन्द्रियः ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः ॥२१२॥

मण्डलत्रयमालिप्य गोमयेन सुगन्धिना ।
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् ॥२१३॥

आलिङ्ग्य स्थापयेत् पूर्वं ब्रह्माणं पूर्वमण्डले ।
उर्ध्वकं तु द्वितीयस्मिन् रुद्रनाम्नि निपातयेत् ॥२१४॥

तिर्यक् कृतां गतिं सम्यग् वैष्णवे मण्डले न्यसेत् ।
बलिपुष्पोपहारैश्च नानापुष्पैर्विचित्रकैः ॥२१५॥

आलिङ्गे चञ्च(चाञ्ज)लिं दद्यात् मधुपायसमिश्रितम् ।
अपूर्व(पो)ल्लपिकामिश्रामालिङ्गे सम्प्रदापयेत् ॥२१६॥

अनन्तरं च दातव्यम् सर्वमेवोर्ध्वके बलिम् ।
स्वस्तिकाऽपूपिकाधूपरूपकैश्च तिलैः सह ॥२१७॥

उन्मत्तकरवीरैश्च पुष्पैरन्यैश्च भूषितः ।
बलिः कार्यः प्रयत्नेन रक्तो रक्ताम्बरैः सह ॥२१८॥

वैष्णवे मण्डले स्थाप्य सर्वबीजकृतो हितम् ।
शुद्धस्यालम्बनैः पीतैश्चरुभिश्च सहासवैः ॥२१९॥

वाचयित्वा द्विजान् स्वस्ति दत्वा पूर्वं च दक्षिणाम् ।
पूजयित्वा च गन्धर्वान् पश्चाद् वाद्यं समाचरेत् ॥२२०॥

तन्त्रीभिः पणवं तु स्यात् समृष्टया(ष्टा)भिः समन्ततः ।
घातपुष्करिकाश्चैव योजयेत् तत्र कर्मणा ॥२२१॥

मृदङ्गपणवा वापि कर्तव्या दर्दरास्तथा ।
दैवतानि च वक्ष्यामि यान्येषां च भविष्यति(वन्ति हि) ॥२२२॥

लक्ष्मलक्षणः शङ्कुकर्णो श्रा(भ्रा)मणी च तथा महान् ।
एतास्तु देवता विप्रा मुरजेषु प्रकीर्तिताः ॥२२३॥

ऋङ्मयत्वान् मृदङ्गं तु भाण्डो भाण्डाकृतीनि च ।
मुरजं शुद्धिकरणादातोद्यं तोदनात् तथा ॥२२४॥

भाण्डस्यादौ प्रमाणेन पणवश्च विधीयते ।
दारणाद् दण्डवाद्यानां दर्दरः परिकीर्तितः ॥२२५॥

दृष्ट्वा मृदङ्गपणवदर्दरं च महामुनिः ।
मेघैस्तु स(स्व)रसंवादान् मृदङ्गो नाम चाकरोत् ॥२२६॥

विद्युज्जिह्वो भवेद्वाद्यो मेघस्य तु महात्मनः ।
ऐरावणो महामेघस्तथा चोर्ध्वगतो भवेत् ॥२२७॥

आलिङ्ग्ये च तडित् ख्याता नाम्ना मेघो बलाहकः ।
दक्षिणे पुष्करे मेघा(घः) कोकिलो नाम स स्मृतः ॥२२८॥

मृदङ्गश्चैव नाम्ना च ऊर्ध्वको नान्यथोच्यते ।
अङ्गारः सिद्धिरित्येवमालिङ्गश्चाष्टपिङ्गलः ॥२२९॥

तत्प्रियोऽपि बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ।
पूजयित्वा तु तां देवीं प्रेक्षां रङ्गे प्रकल्पयेत् ॥२३०॥

करीषस्य तु सङ्घाते मृदङ्गांस्थापयेद् बुधः ।
नाटकेऽङ्के प्रकरणे वीथ्यां भाणे डिमे तथा ॥२३१॥

मृदङ्गपणवाश्चापि दर्दरं चोपकारयेत् ।
एवमेतद् बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् ॥२३२॥

अत ऊर्ध्वं प्रवक्ष्यामि उपहस्तस्य लक्षणम् ।
कर्करी समहस्तश्च हस्तपाणित्रयं तथा ।
वर्तना दण्डहस्तश्च पञ्चशिक्षाकरा(र)स्ततः ॥२३३॥

तर्जन्यङ्गुष्ठयोगेन सदेशाद्रुतिभिस्ततः ।
पर्यायपतनज्ञेया कर्करी हस्तयोर्द्वयोः ॥२३४॥

समयोः समतालेन द्वयोर्हस्ततलार्धयोः ।
पर्यायशः प्रपातो यः समहस्त इति स्मृतः ॥२३५॥

विभावितस्य वालस्य पार्ष्णिनाङ्गुलिभिस्तथा ।
सकृद्दक्षिणहस्तस्य हस्तपाणित्रयं भवेत् ॥२३६॥

पूर्वं दक्षिणहस्तेन क्रमाद् वामेन वा(पा)दतः ।
चत्वारो यत्र वर्तन्ते वर्तनाद् वर्तनाः स्मृताः ॥२३७॥

प्रथमं वामहस्तेन गृहीत्वा दक्षिणेन तु ।
प्रहाराः क्रमवातेन दण्डहस्तः समस्तयोः ॥२३८॥

सौष्ठवं लाघवं चैव बाहुल्यं दृढताऽपि च ।
सर्वेषां चैव हस्तानां गुणाश्चत्वार ईरिताः ॥२३९॥

एवमेतन् मया प्रोक्तं हस्तानामपि लक्षणम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वादकानां तु लक्षणम् ॥२४०॥

गीतवादकलापातग्रहमोक्षविशारदः ।
अथ लघुहस्तच्छिद्रपाणिर्विधिज्ञः सिद्धिस्थाने ध्रुवाकुशलः ।
कलाभिरतो मधुरहस्तः सुनिविष्टो मार्जनो बलवान् ॥२४१॥

सुविहितशरीरबुद्धिः संसिद्धो वादकः श्रेष्ठः ।
आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्रमः ॥२४२॥

प्रतिग्रहीता सिद्धीनामगदो निश्चलो निपुणः ।
शीघ्रो लघुहस्तो विधानविद् वादनान्तरे वेदी ।
... ... ... दर्दरी च प्रशस्यते ॥२४३॥

[प्रतिग्रहीता सिद्धीनामङ्गदोषविवर्जितः ।
निश्चलो निपुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवेदी च दर्दरी च प्रशस्यते ।।]

एतत् सर्वं नाट्ययोगं समीक्ष्य
प्रोक्तं वाद्यं सर्वलोकानुमानात् ।।
नोक्तं यत् मानागमाच्छास्त्रबुध्या
सद्भिः कार्यं मार्गजातिं समीक्ष्य ।।२४४।।

स्फुटप्रहारं विषमं विभक्तं
सन्नोऽपि घुष्टारिभितं कु(क)लं च ।।
त्रिमार्जनं पूरितरागयोग-
मृदङ्गवाद्यं गुणतो वदन्ति ।।२४५।।

वाद्येषु यत्नः प्रथमं तु कार्यः
शय्या च नाट्यस्य वदन्ति वाद्यम् ।।
वाद्येऽविगीतेऽपि च सुप्रयुक्ते
नाट्यस्य शोभा न विनाशमेति ।।२४६।।

इति भरतीये नाट्यशास्त्रे वाद्याध्यायो नाम त्रयस्त्रिंशोऽध्यायः ।।

# नाट्यशास्त्रम्

## अथ पञ्चत्रिंशोऽध्यायः

विन्यासं भूमिकानां च सम्प्रवक्ष्यामि नाटके ।
[1]यादृशो यस्य कर्तव्यो विन्यासो भूमिकास्वथ ॥१॥
[2]गतिवागङ्गचेष्टाभिः सत्वशीलस्वभावतः ।
[3]परीक्ष्य पात्रं तज्ज्ञस्तु युञ्ज्याद् भूमिनिवेशने ॥२॥
तस्मिन्नन्विष्य हिं गुणवान् कार्या(र्यः) पात्रसमाश्रया(यः)
न खेदजननं बुद्धेराचार्यस्य भविष्यति ॥३॥
[4]आचार्यः पात्रजांश्चैव गुणाञ्ज्ञात्वा स्वभावजान् ।
ततः कुर्याद् यथायोगं नृणां भूमिनिवेशनम् ॥४॥

---

यद्भूमिकालाभपराः सदाशिवपदस्थिताः ।
तां वन्दे परमां शक्तिं चन्द्रमौलेः परां तनुम् ॥

एवमातोद्यपर्यन्तं निरूपिते नाट्यविषये यद्यपि न वक्तव्यान्तरमस्ति तथापि कठिनापदेशेनास्य शास्त्रस्य प्रवृत्तेर्नाट्याचार्येणेत्थं भूमिकानिवेशः कार्यं इति शिक्षयितुं समाधानान्तरम् । तदाह । विन्यासं भूमिकानां चेति । नाट्यस्यावष्ठम्भस्थानमि(मे)व भूमिका । ता(साम)वष्टम्भो हि योग्यवलनिमित्तानुभावहराद् रसभावप्रयोगकौशलमस्येति । नाटकमि(इ)ति ॥१॥

नाट्ये सत्वं मानसो हेवाक्र(क)म(सः) । शीलं शारीरःआर(मा) ह्यार्यमन्तः ॥२॥३॥

स्वाभाविका गुणाः सामान्याभिनये व्याख्याता एव । ते यस्य सति(न्ति) ॥४॥

---

१. KSS., यादृशैरेव NS. यादृश्यो यस्य कर्तव्या ।
२. NS. गतिर्वाराङ्गदेष्वेभिः सत्त्वशीलैः समासतः ।
३. 'परीक्ष्य पात्रं' इत्यारभ्य 'पात्रं योज्यं स्वभूमिषु' इत्यन्तं का० पुस्तके नास्ति ।
४. NS. आधायो यमजा ।

अङ्गप्रत्यङ्गसंयुक्तमहीनाङ्गं वयोन्वितम् ।
न स्थूलं न कृशं चैव न दीर्घं न च मन्थरम् ॥५॥

श्लिष्टाङ्गं द्युतिमन्तं च (विश्लिष्टाङ्गं) सुस्वरं प्रियदर्शनम् ।
एतैर्गुणैश्च संयुक्तं देवभूमिषु योजयेत् ॥६॥

स्थूलं प्रांशुं बृहद्देहं मेघगम्भीरनिस्वनम् ।
रौद्रस्वभावनेत्रं च स्वभावभ्रुकुटीमुखम् ॥७॥

रक्षोदानवदैत्यानां भूमिकासु प्रयोजयेत् ।
पुरुषाणां प्रयोगस्तु तथाङ्गक्रिययान्वितः ॥८॥

सुनेत्रसुभ्रुवः स्वङ्गाः सुललाटाः सुनासिकाः ।
स्वोष्ठाः सुगण्डाः सुमुखाः सुकण्ठाः सुशिरोधराः ॥९॥

स्वङ्गप्रत्यङ्गसंयुक्ता न दीर्घा न च मन्थराः[1] ।
न स्थूला न कृशाश्चैव स्वभावेन व्यवस्थिताः ॥१०॥

सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः ।
[2]कुमारराजभूमौ तु संयोज्याश्च नरोत्तमाः ॥११॥

अङ्गैरविकलैर्धीरं[3] स्फुटं वसनकर्मणि ।
न दीर्घं नैव च स्थूलमूहापोहविचक्षणम् ॥१२॥

---

स्त्रीभूमिकायामिति । कौशिकीप्राधान्यख्यापनाय पूर्वं स्त्रीभूमिकोक्ता ॥५॥

विशि(श्लि)ष्टाङ्गमिति । विभक्ताङ्गम् । रत्या दीप्त्यात्मकं सन्ततम् । स(सु)स्वरमिति ॥६॥

सुकुमार(त)या च पुरुषाणां ये प्रयोगा(गे) भूमिकायोगि(गे)न उपयोगिनो धर्मा उक्तास्त एव प्रियया तद्योषिता युक्ताः कर्तव्यास्तेन स्थूलाः(लमित्यादि) ॥७॥८—१२॥

---

१. NS. दीर्घाश्च मदमन्थरा ।
२. कुमारराजभूमिषु प्रयोज्या भरतोत्तमरः ।
३. वीरम् ।

[1]अदीनं च प्रगल्भं च प्रत्युत्पन्नविनिश्चयम् ।
सेनापतेरमात्यानां भूमिकासु प्रयोजयेत् ॥१३॥

पिङ्गाक्षं [2]घोणनासं च नेत्र(ह्रस्व)मुच्चमथापि वा ।
कञ्चुकिश्रोत्रियादीनां भूमिकासु नियोजयेत् ॥१४॥

एवमन्येष्वपि तथा नाट्यधर्मविभागतः[3] ।
[4]देशवेषानुरूपेण पात्रं योज्यं स्वभूमिषु ॥१५॥

मन्थरं वामनं कुब्जं विकृतं विकृताननम् ।
विष्टब्धनेत्रं काणाक्षं स्थूलं चिपिटनासिकम् ॥१६॥

दुर्जनं दुस्वभावं च [5]विकृताचारमेव च ।
दासभूमौ प्रयुञ्जीत बुधो दासाङ्गसम्भवम्[6] ॥१७॥

प्रकृत्याऽतिकृशं क्षामं तपःश्रान्तेषु योजयेत् ।
तथा च पुरुषं स्थूलमुपरोधेषु योजयेत् ॥१८॥

---

प्रत्युत्पन्नविनिश्चयमिति । झटिति मानवन्तः(म्) । सेनापतेरमात्यानामिति पाठे ॥१३॥

त्रयो घोणसु(नासं) च । कुटिला (ना)साऽस्येति ॥१४॥

एवमिति । उक्तव्यतिरिक्ता येऽन्ये तापसप्रभृतयस्तद्विषये नाट्यधर्मेणानुरागेण प्रवेशने कर्तव्ये देशहेवाकानुरूप्येण वयोवर्णाश्रमादिरूपावस्थो विचित्रानवस्थोचिताय भूमिकामुपयोजयेत् ॥१५॥१६—१७॥

श्र(उ)परा(रो)धष्विति ॥१८॥

---

१. NS. अहीनं च प्रगल्भं च प्रत्युन्नतः······।
२. दीर्घनासं च ।
३. प्रवेशने ।
४. दशावस्थानरूपेण पात्रं युञ्ज्यात् ।
५. विकृताकारमेव च ।
६. संयुतम् ।

यदि वा [1]नेदृशाः सन्ति प्रकृत्या पुरुषा द्विजाः ।
आचार्यबुद्धया योज्यास्तु भावचेष्टास्वभावतः ॥१९॥

या यस्य सदृशी चेष्टा ह्युत्तमाधममध्यमा ।
सा [2]तथाऽऽचार्ययोगेन नियम्या(ऽ)भावभाविनी[3] ॥२०॥

अतः परं प्रवक्ष्यामि भरतानां विकल्पनम् ।
भरताश्रयाश्च भरतो विदूषकः सौ(कस्तौ)रिकस्तथा नान्दी(को नटो वादी)।
नन्दी ससूत्रधारो नाट्यरसो(करो) नायकश्चैव ॥२१॥

मुकुटाभरणविकल्पौ वि(ल्पैर्वि)ज्ञेयो(या) माल्यवस्तुविविधैश्च ।
कार(रु)ककुशीलवाद्या विज्ञेया नामतश्चैव ॥२२॥

घुर्यवदेको यस्मादुद्धारोऽनेकभूमिकायुक्तः ।
भाण्डग्रहोपकरणैर्नाट्यं भरतो भवेत् तस्मात् ॥२३॥

लोका(क)हृदाश्रयकृता(तां)सर्वप्रकृतिप्रचारसंयुक्ता(म्) ।
नानाश्रयां प्रकुरुते तथा च नारी तु सर्वत्र ॥२४॥

---

अतः परिजनभूमिकाध्यायं यदि तु स्वभावतस्तादृग्(न) भवति तदा भूमिकास्वभावोचिता चेष्टा आचार्या(र्यबुद्ध्)या कार्या । चेष्टाग्रहणेनाकाराद्यपि प्रतिशीर्षकादिना कर्तव्यमिति लक्ष्यते ॥१९॥

सा चेष्टाऽऽचार्येण नियमनीया । तथा सत्यभावेऽपि भवा(भावि)नी भवित्री भवति । भावश्चारत्यादिकं भावयति रसार्णेन(ना)पि विरौति तच्छीला ॥२०॥

भरतानामिति । नाट्योपयोगिनाम् । इयता परिकरेण विद्या नाट्यं तु न निर्वहतीत्येतावदवश्याहरणीयमिति भावः ॥२१—२२॥

स्वधुर्य(घुर्य)वदिति । यः सर्वत्र प्रतिज्ञागर्भितरसभरोद्वहनाद्धरत्वच्छेदे-

---

१. NS. नेतराः ।
२. KSS. तथा चान्ययोगेन ।
३. अतः परं का० पुस्तके 'एवमन्येष्वपि' इत्यादयः ५९ श्लोका अधिकाः ।

प्रत्युत्पन्नप्रतिभो नर्मकृतो नर्मगर्भनिर्भेदः ।
[1]छेदविदूषितवचनो विदूषको नाम विज्ञेयः ॥२५॥

तूर्यं(प)ति(र्य)स्तु नरः सर्वातोद्यप्रवादने कुशलः ।
[2]तूरपरिग्रहयुक्तो विज्ञेयस्तौरिको[3] नाम ॥२६॥

नटनृति(त्तौ) धात्वऽर्थोयं भूतं नाटयति लोकवृत्तान्तम् ।
रसभावसत्वयुक्तं यस्मात् तस्मान्नटो भवति ॥२७॥

स्तुत्यभिवादनकृतैर्मधुरैर्वाक्यैः सुमङ्गलाचारैः ।
सर्वं स्तौति हि लोकं यस्मात् तस्माद्भवेद्वादी ॥२८॥

भावेभ्यो बहुधाऽस्मिन् रसा(नसौ) वदति नाट्ययोगेषु ।
प्राकृतसंस्कृतपाठ्यो नन्दी नामेति स ज्ञेयः[4] ॥२९॥

[5]गीतस्य च वाद्यस्य च पाठ्यस्य च नैकभावविहितस्य ।
[6]शिष्टोपदेशयोगात् सूत्रज्ञः सूत्रधारस्तु ॥३०॥

यस्मात् यथोपदिष्टान् [7]रसांश्च भावांश्च सत्वसंयुक्तान् ।
भूमिविकल्पैर्नयति च नाट्यकरः कीर्तितस्तस्मात् ॥३१॥

चतुरातोद्यविधानं सर्वस्य तु शास्त्रखे (वे)दविहितस्य ।
[8]नाट्यस्यान्तं गच्छति तस्माद्वै नायकोऽभिहितः ॥३२॥

नानाप्रकृतिसमुत्थं करोति यः शीर्षकं मुकुटयोगे ।
विविधैर्वेषविशेषैः स च(मु)कुटकारस्तु विज्ञेयः ॥३३॥

---

र्गीतिविविधं कृत्वा दूषितादिवाचयैवानुभावादिप्रतिजागरं कुर्वंता(न्त)न्यरसः ॥२३॥२४—३३॥

---

१. NS. छेदविभूषितवचनः ।
२. तूरपतिग्रहयुक्तः ।
३. रिपो नाम ।
४. विज्ञेयः ।
५. गानस्य ।
६. शास्त्रोपदेशयोगात् ।
७. सास्वभावाद्यसत्त्वयुक्तान् ।
८. गच्छति यस्मान्नाट्ये तस्माद्वैनायको भवति ।

[भाण्डकवाद्यज्ञा या लयतालज्ञा रसानुविद्धा च ।
सर्वाङ्गसुन्दरी वै कर्तव्या नाटकीया तु] ॥३४॥

यस्त्वाभरणं कुर्याद् बहुविधविहितं स चाभरण: (:)[1] ।
[2]यश्चोपकरणयोगात् स तेन नाम्नाऽभिधातव्य: ॥३५॥

यो वै माल्यं कुरुते पञ्चविधं माल्याकृत् स विज्ञेय: ।
लश्चापि वेषयोगं कुरुते स च वेषकारी तु[3] ॥३६॥

चित्रज्ञश्चित्रकरो वस्त्रस्य [4]रञ्जानात्तथा रजक: ।
जत्वश्मलोहकाष्ठैर्द्रव्यकरै:(र:) कारुकश्चैव ॥३७॥

नानातोद्यविधाने प्रयोगयुक्त: प्रवादने कुशल: ।
अतोद्येऽप्यतिकुशलो यस्मात् स कुश (शी)लवो ज्ञेय:[5] ॥३८॥

[6]यद्यत् समाश्रयन्ते शिल्पं वा कर्म वा प्रयोगं वा ।
तत्तैवोपगतगुणा विज्ञेया नामत: पुरुषा: ॥३९॥

एवं तु नाटकविधौ जातिर्नटसंश्रया बुधैर्ज्ञेया ।
[7]नाट्योपकरणयुक्ता नानाशिल्पप्रसक्ता च ॥४०॥

[उक्तोऽत्र भूमिकान्यास: प्रयोक्तारश्च योगत: ।
आदिष्टं नाट्यशास्त्रं च मुनय: किमिहोच्यताम्] ॥४१॥

इति भरतीये नाट्यशास्त्रे भूमिकाविकल्पाध्याय: पञ्चत्रिंश: ॥

---

पञ्चविधमित्याहार्याभिनये दर्शितम् ॥३६—३७॥

कुशा(न् ला) तीति कुशल:(:) । निरूढिलक्षणा । तेषां लावण्या(न्या)-दियम् । अत एव कुशजातिं कुशिं कुर्यां(शा) यो लुनाति अयोविकारमपि यश्छिनत्ति स कुशीलव: । उपचारात् कर्मणि पुनर्नाट्योपकरणयुक्तेनापि नटविदूषकादि-शिल्पप्रयोक्ता(वतृ) कू(मुकु)टकारादि(दावि)ति शिवम् ॥३८—४१॥

इत्यभिनवगुप्ताचार्यविरचितायां नाट्यवेदवृत्तावभिनवभारत्यां
भूमिका(वि)कल्प: पञ्चत्रिंश: ॥

---

१. NS. चाभरणम् ।
२. कर्ता यश्चोपकरणायोगात्स तेन नाम्ना विधातव्य: ।
३. स च वेषकरस्तु विज्ञेय: ।
४. रञ्जनाद्भवेत् ।
५. कुशीलवस्तस्मात् ।
६. यद्यत् समाचरन्ते ।
७. नाम्नोपकरणयुक्ता नानाशिल्पप्रयुक्ता च ।

# नाट्यशास्त्रम्

## अथषट्त्रिंशोऽध्यायः

[[1]अथात्रेयो वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यो मनुरायुस्तथात्मवान् ॥१॥
विश्वामित्रः स्थूलशिराः संवर्तिः (र्तः) प्रमतिर्दनुः ।
उशना बृहस्पतिर्व्यासश्चावनः काश्यपो ध्रुवः ॥२॥
दुर्वासा जामदग्न्यश्च माकण्डेयोऽथ गालवः ।
भरद्वाजश्च रैभ्यश्च यवक्रीतस्तथैव च ॥३॥
स्थूलाक्षः शकलाक्षश्च काण्वो मेघातिथिः क्रतुः ।
नारदः पर्वतश्चैव सुवर्माऽथैकजो द्विजः ॥४॥
नितम्बुर्भुवनः सौम्यः शतानन्दः कृतव्रणः ।
जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः] ॥५॥
एवं ते (तु) मुनयः श्रुत्वा[2] सर्वज्ञं भरतं ततः ।
पुनरूचुरिदं वाक्यं कुतूहलपुरोगमम् ॥६॥
यस्त्वया गदितो ह्येष नाट्यवेदः पुरातनः ।
एकचित्तैः स चास्माभि[3]ः सम्यक् समुपधारितः ॥७॥

---

यस्मिन् निगूढपरमार्थमबुध्यमानाः
संसारनाट्यरसभावमुपाश्रयन्ते ॥
बुध्वा पुनर्मुहुरहो निजमेव यान्ति
तत् पूर्णधाम शिवतत्त्वमहं प्रपद्ये ॥

यदिदं नाट्यमुक्तं तस्य रसभावरूपताप्रतिपादने नियतानुकारतानुकारितैव चावितत्य निरस्याद्या (त्या) यतं पूर्वरङ्गस्य न नाट्यरूपतेत्युक्तम् । तदेतदिहाध्याये प्रश्नोत्तरमुखेनेतिहासदृशा दृढीक्रियते । न तत्र प्रथमं पूर्वरङ्ग एव नाट्यत्वं तावदाचक्षते । तत्पूर्वकत्वान्नाट्यं ततोऽप्यनुकारकथा निरस्यते ॥१—५॥

---

१. एतानि कोष्ठवद्धपद्यानि पुस्तकान्तरे न पठितानि ।

२. KSS. प्रीताः ।

३. KSS. सहास्माभिः NS. सदास्माभिः ।

एकश्च संशयोऽस्माकं तं नो व्याख्यातुमर्हसि ।
को वाऽन्यो नाट्यवेदस्य निश्चयं वक्तुमर्हति[1] ॥८॥

न वयं परिहासेन[2] न विरोधेन नेर्ष्यया ।
[3]पृच्छामो भगवन् नाट्यमुपदेशार्थमेव तु ॥९॥

अस्माभिश्च तदा नोक्तं कथाच्छेदो भवेदिति ।
[4]इदानीं तूपशिक्षार्थं नाट्यगुह्यं निदर्शय ॥१०॥

लोकस्य चरितं नाट्यमित्यवोचस्वदी(स्त्वमी)दृशम् ।
तेषां तु (शेषाणां) लोकं(क)गुह्यानां निश्चयं वक्तुमर्हसि ॥११॥

देवस्य(लोकस्य) कस्य चरितं पूर्वरङ्गे द्विजर्षभ ।
किमर्थं [5]भुज्यते ह्येष प्रयुक्तः किं करोति वा ॥१२॥

कस्माच्चैव पुनः शौचं सम्यक् चरति सूत्रदृक्[6] ।
कथमुर्वीतले नाट्यं स्वर्गान्निपतितं विभो ॥१३॥

---

तत्र प्रश्नं तावत् दर्शयति । एवं तु मुनय इति ॥६॥७—८॥

तत्र यान्या परिहासप्रायनाट्यशास्त्रविरुद्धं च नाट्यतो यन्त्रितापर्यन्त इति वचनान् नटानां जीविकोपायोऽयमित्याशङ्कां वारयति । परिहासेनेत्यादिना ॥९॥

तपः (तूप)शिक्षार्थमिति । तत्त्वनिर्णयार्थमित्यर्थः नाट्यगुह्यमिति । नाट्ये यत् तात्पर्यारूढ्यर्थं गुह्यम् ॥१०॥

शेषाणां लोकगुह्यानामिति । लोके यानि दृश्यन्ते अथ च पूर्वरङ्गे क्रियन्ते तैस्तावल्लोके चरितैर्भवितव्यम् । लोकस्य चरितं यतो नाट्यमतो लोकगुह्यानामिति साभिप्रायेणाध्यारोपेण(प)गर्भेयमुक्तिः ॥११॥

तथा चाह । लोकस्य कस्य चरितमिति । परिदृश्यमानस्य भावना । एतच्चरितं न नूनं गूढोऽ(ढम)तः कश्चिल्लोकोऽस्तीत्यादयः । दृश्यं सर्वं च यदिति स(स्व)र्गे एवैतन्नाट्यं सकलं सुखस्थाने । अति च (तश्च) नोपदेशो यत्तयोरुपदेशो मर्त्य'''॥१२॥

तत्र कथमेतत् तदाह । कथमूर्वीतल इति ॥१३॥

---

१. NS. को वान्यो यन्निवेद्यस्य निश्चयं वेत्ति तत्त्वतः ।
२. KSS., परिभावेन । NS. परिहासेन विरोधेन च नान्यथा ।
३. NS., इच्छामो'''। KSS.'''मुपदेशाभिपूर्वकम् ।
४. KSS., तत्सर्वं निखिलेनेदं । NS. इदानीं रूहशिक्षार्तं ।
५. NS. युज्यते घोषप्रयुक्तः ।
६. KSS., कस्मादेव पुनः शौचं श्रुतं'''। NS. कस्माच्चैव मुनिः शौचं शुचिः'''।

कथं तवाऽयं वंशश्च नटसंज्ञः प्रतिष्ठितः ।
सर्वमेव यथातत्त्वं कथयस्व महामुने ॥१४॥

[1]भरत उवाच—

[तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं गुह्यार्थाभिनयं प्रति ॥]

[2]ब्रवीमि वः कथां गुह्यां यन् मां पृच्छत् सुव्रताः ।
पूर्वरङ्गविधानस्य तां च मे सन्निबोधत ॥१५॥

प्रोक्तवानस्मि यत् पूर्वं [3]शुभं विघ्ननिवर्हणम् ।
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः ॥१६॥

शस्त्राणां [4]प्रतिकारार्थं शरीरावरणं यथा ।
[5]क्रियते हि यथा पापं हुतेनैव प्रशाम्यति ॥१७॥

एवं जप्यैश्च होमैश्च देवताभ्यर्चनेन च ।
सर्वातोद्यविधानैश्च तथा गीतस्वनेन च ॥१८॥

स्तुत्याशीर्वचनैः शान्तैः कर्मभावानुकीर्तनैः[6] ।
[7]मया पापापहरणैः कृते विघ्ननिवर्हणे ॥१९॥

स्तुतिगीताभिसंसृष्टैर्देवैरभिहितोऽस्म्यहम् ।
[8][नितरां परितुष्टाः स्मः प्रयोगेणामुना च ते ॥२०॥

---

नाट्यवेदवित् त्वदीयो वंशो नटसंज्ञायां(ज्ञया) मूर्खत्वेन कथं प्रसिद्धम् ( : ) । यद्यपि बहवः प्रश्नास्तथापि नाट्यविषयोऽयं संशय एको बहुधर्मविषयो यथा स्थाणुर्वा नभो वोच्चशिलादावेव कुशलं वेत्येक एव संशयः ॥१४॥

गुह्यार्थस्याभिनयम् प्रथममेतदर्थमिति यावत् । अन्ये तु गुह्यार्थो यत्र तादृगभिनयो नाट्यं तम् ॥१५॥

प्रविघ्नन्ति । निर्वह(बर्ह)णं रङ्गपूजनम् । तस्यानुबन्धेन तत्प्रसङ्गेन ॥१६॥

शरीरावरणं कवचानि(दि) ॥१७॥१८—२०॥

---

१. NS. does not read.
२. NS., कथयामि KSS. ब्रीवीमि वो ह्ययं विप्रा···।
३. KSS. यत्पूर्वमहं ।
४. KSS. प्रतिहारार्थं शरीराचरणं यथा ।
५. KSS. तथा सर्वगतं पापं स्मृतेनैव प्रशाम्यति ।
६. KSS. कीर्तनात् ।
७. NS., मया पापापकरणे KSS. मया च पापहरणे ।
८. KSS. does not read.

देवतासुरमानन्द्य यस्माल्लोकश्च(कं च) नन्दति ।]
तस्मादयं प्रयोगस्तु नदिनाम्ना(नान्दीनामा) भविष्यति ॥२१॥

[1]गीतवाद्यानुनादो हि यत्र काकुस्वनः(रः) शुभः ।
तस्मिन देशे विपाप्मानो म(मा)ङ्गल्यश्च(ञ्च) भविष्यति ॥२२॥

यावत्तं पूरयेद् देशं ध्वनिर्नाट्यसमाश्रयः[2] ।
[3]न(स्था)स्यन्ति हि रक्षांसि तं देशं न विनायकाः ॥२३॥

आवाहे च विवाहे च यज्ञे नृपतिमङ्गले ।
नान्दीशब्दमुपश्रुत्य हिंस्रा नश्यन्ति चैव हि ॥२४॥

पाठ्यं नाट्यं तथा गेयं चित्रवादित्रमेव च ।
वेदमन्त्रार्थवचनैः [4]समं ह्येतद् भविष्यति ॥२५॥

श्रुतं मया देवदेवात् तत्त्वतः शङ्कराद्धितम्[5] ।
स्नानजप्यसहस्रेभ्यः पवित्रं गीतवादितम्[6] ॥२६॥

[7]यस्मिन्नातोद्यनाट्यस्य गीतपाठ्यध्वनिः शुभः ।
भविष्यत्यशुभं देशे नैव तस्मिन् कदाचन ॥२७॥

एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया ।
नाना स्तुतिकृतैर्वाक्यैर्देवताभ्यर्चनेन च ॥२८॥

---

नान्दीनामेति । नन्दनात् । अत एव नान्द्यन्त इति पूर्वरङ्गान्त इत्यर्थः ॥२१॥

काकुस्वर इति । पूर्वरङ्गसिध्यर्थे पाठ्यम् । ततः शृङ्गाररसयुक्तां पठेदार्यामित्यादौ (भा. ना. ५—१२२) । न त (तु) सदैव देवेन परतन्त्रीकृतस्य कदाचिद् द्विजन्मादेरिति वाद्याद्युपभोगावसरः ॥२२—२३॥

ततो वेदविरुद्धमित्याशङ्क्याह । आवाहे च विवाहे चेत्यादि ॥२४॥२५॥

---

१. NS., गीतावाद्यात्तु नान्दी हि KSS. गीतावाद्यानुनादी च ।
२. KSS. ध्वनिरातोद्यसंश्रयः ।
३. KSS. तावतानां शुभं किञ्चित् न च विघ्नविनायकाः ।
४. KSS. तथैव च ।
५. NS., भवतः शंकरोदितम् KSS. ततश्च शंकरोदितम् ।
६. NS., यत्र संगतीवादितम् । KSS. श्रेष्ठं मे गीतवादितम् ।
७. KSS. यस्मिन्नातोद्यनाट्यस्यो गीतवाद्यश्च निश्चयः ।

यतोऽभिवादनं क्लिष्टं शिष्टं तद्रङ्गमण्डले[1] ।
[ततस्तस्य हि तच्छौचं विहितं तु द्विजोत्तमाः ॥२९॥
शौचं कृत्वा यतो मन्त्रं पूजनं जर्जरस्य तु ।
उच्यते पूर्वरङ्गेऽस्मिन् तस्माच्छौचं प्रकीर्तितम् ॥३०॥
यथावतारितं चैव, नाट्यमेतन् महीतले ।]
[2]वक्तव्यं सर्वमेतद्धि न शक्यं हि निगूहितुम् ॥३१॥
[3]ममैते तनयाः सर्वे नाट्यवेदसमन्विताः ।
सर्वलोक(कं)प्रहसनैर्बाधन्ते नाट्यसंश्रयैः[4] ॥३२॥
कस्यचित्त्वथ कालस्य शिल्पकं ग्राम्यधर्मकम्[5] ।
ऋषीणां व्यङ्ग्यकरणं कुर्वद्भिर्गणसंश्रयम् ॥३३॥
[6]आश्राव्यं तद् दुराचारं ग्राम्यधर्मप्रवर्तितम् ।
निष्ठुरं चाप्रस्तुतं च काव्यं संसदि योजितम्[7] ॥३४॥
तच्छ्रुत्वा मुनयः सर्वे भीमरोषप्रकम्पिताः ।
ऊचुस्तान् भरतान् क्रुद्धा निर्दहन्तः इवाग्नयः ॥३५॥

---

आरा(ग)मिकत्वमस्यार्थस्याह । श्रुतं देवादिदेव(वात्)तत्त्व(तः) शङ्करादिद-मुत्कृष्टमिति ॥२६॥२७—३१॥

भूस्पर्शादपवित्रीभूतं तदेव पवित्रीभूतं प्रहसनैः······बाधन्त इति । तच्च नाट्यस्याविदन्तो नियतमनुकरणीयं मन्यमानाः । परचेष्टानुकरणोल्लास इति नीत्या सर्वे प्रहसितवन्त इति । सायं प्रतिपन्ना इति निन्दार्थत्वात् त एत एतत्पक्षं प्रतिक्षेप-कृदुत्पत्तिविघातं निन्दार्थत्वादेता नाट्योत्पत्तावेव दर्शितं र(व्य)ङ्गकरणमिति ॥
३२॥३३—३५॥

---

१. KSS. शिरसा रङ्गमण्डले NS. शितं तद्रङ्गमण्डले ।
२. KSS. तथा विधिसमापन्नम् न शक्यं विनिगूहितम् ।
३. NS. सर्वमेतत्तया सर्वे ।
४. KSS. वाध्यन्ते ह्यास्यसंश्रयैः । NS. वाचं तेनाद्य संश्रये ।
५. KSS. शिल्पकर्म ममाम्यधात् ।
६. KSS. अग्राह्यं सुदुराचारं ।
७. NS. संसद्वियोजितम् ।

मा तावद् भो द्विजा युक्तमिदमस्मद्विडम्बनम् ।
को नामायं परिभवः किञ्च नास्मासु सम्मतम्[1] ॥३६॥

यस्माज् ज्ञानमदोन्मत्ता न वेत्थाऽ(विद्वा न) विनयाश्रिताः[2] ।
तस्मादेतद्वि(द्धि) भवनां(तां) कुज्ञानं नाशमेष्यति ॥३७॥

ऋषीणां ब्राह्मणानां च समवायसमागता(:)[3] ।
[4]निर्व्रताश्च(निराहुता) विना होमैः शूद्रचारा भविष्यथ ॥३८॥

अपाङ्क्तेयाः कुत्सिताश्चावमा एव भविष्यथ ।
यस्त्व वो भविता वंशः सर्वाशौचो भविष्यति ॥३९॥

ये च वो वंशजास्तेऽपि भविष्यन्त्यथ नर्तकाः ।
परोपस्थानवन्तश्च शस्त्रपण्योपजीविनः[5] ॥४०॥

शापं दत्तं तथा ज्ञात्वा सुतानां मम देवताः (सुतेभ्यो मे तदा सुराः) ।
सर्वे विमनसो भूत्वा तानृषीन् समुपस्थिताः ॥४१॥

[6]समस्तैश्च त(याचमानैस्त)तः प्रोक्तं देवैः शक्रपुरोगमैः ।
इदानीं दुःखमुत्पन्नं नाट्यमेतद् विनङ्क्षति ॥४२॥

---

विडम्बकं(नं) गण्डसंश(श्र)यमिति । गण्डवदन्यापदेशमुखेनेत्यर्थः ॥३६॥

ज्ञानमदे(दोन्)मत्ता इति । मिथ्या ज्ञानमिदं युष्माकमिति पर्यवसितमिति भावः । विद्वा ब्रह्मणा । वेदवाह्याः ॥३७॥

निराहुताः परिभवभाजः ॥३८॥३९—४०॥

सुरा इन्द्राद्याः ॥४१॥

याचमानैरिति । ऋषीन् प्रार्थयदु(द्भिरु)क्तम् ॥४२॥

---

१. NS. किंवा नास्मासु संमते । KSS. किंवा नाम्नाभिसंगतम् ।
२. NS. चेच्छाविनयान्विताः ।
३. NS. समनायसमागमे KSS. समवायोऽथ संगमे ।
४. NS. निर्ब्रह्मणो निराभूतः शूद्राचारो भविष्यति । KSS. निर्ब्रह्माचरणभूत्वा शूद्रचारा भविष्यथ ।
५. NS. पुंस्त्रीबालोपजीविनः ।
६. KSS. तावद्भिश्च तथा प्रोक्तं ।

ऋषिभिश्च ततः प्रोक्तं न चैतद्धि विनक्ष्यति[1] (न त्वेतद्विनशिष्यति)।
शेषमन्यत्र यत् प्रोक्तं सर्वमेतद् भविष्यति ॥४३॥

एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम् ।
विषण्णास्ते ततः सर्वे श्रुत्वा मां समुपस्थिताः ॥४४॥

[2]प्रोक्तवन्तश्च मां पुत्रास्त्वयाहो नाशिता वयम् ।
अनेन नाट्यदोषेण शूद्राचारा हि यत् कृताः ॥४५॥

मयापि सान्त्वयित्वोक्ता मा क्रोधं व्रजतानघाः ।
[3]कृतान्तविहितोऽस्माकं नूनमेष विधिः सुताः ॥४६॥

मुनीनां न मृषा वाक्यं भविष्यति कदाचन ।
निधने च मनो मा भूद् युष्माकमिति सान्त्विताः ॥४७॥

जानीध्वं तत्तथा नाट्यं ब्रह्मणा संप्रवर्तितम् ।
शिष्येभ्यश्च तदन्येभ्यः प्रयच्छामः प्रयोगतः ॥४८॥

---

तत्र कुत्सितानियताकारसभागोचितं स्वस्थितरसभावप्रयोगेऽवस्थाप्यत इत्याह न त्वेतं(तद्) विहितं(विनशिष्यति) ॥४३॥४४—४६॥

निधने आत्महनने ॥४७॥

जनिष्ध(जानी)ध्वं तत्तथा नाट्यमिति । तत्त्वापरिज्ञानादयं भवति शापो जात इदानीमत्रैव तत्त्वपरिज्ञाने रसभावस्वरूपे यत् तच्च दर्शितं वितत्य रसाध्यायादौ-(भा. ना. ६) तत्र कैश्चिद् वार्तिककारीयं श्लोकद्वयं शूरग्रन्थमध्ये आक्षिप्तम् ।

नाट्यस्य ज्ञाततत्त्वस्य यदभीष्टं प्रयोजनम् ।
तत्त्वतस्तदनिर्णीतं शापाध्यायेन दर्शितम् ॥

इत्यादि । रसप्राधान्यमेवाह ।

यथास्त(स्वा)दप्रसङ्गेन सूचाद्यर्थोपयोगिता ।
आस्वादकानां प्रीत्यर्थं केवलं रसयोजनम् ॥

---

१. NS. न हि त्वेद्धि वक्ष्यति KSS. न चैद्धि विनश्यति ।

२. KSS. varies.

३. NS. कृतानुविहितोऽस्माकं ।

मा वै प्रणश्यतामेतनाट्यं दुःखप्रवर्तितम् ।
महाश्रयं महापुण्यं वेदाङ्गोपाङ्गसंभवम् ॥४९॥
अप्सरोभ्य इदं चैव याथातत्त्वं यथाश्रुतम् ।
नाट्यं दत्त्वा ततः सर्वे प्रायश्चित्तं चरिष्यथ[1] ॥५०॥

॥इति भरतीये नाट्यशास्त्रे नाट्यशापो नामाध्यायः षट्त्रिंशः ॥

---

न च जीविकादक्षिणेन च योग इति भावः ॥४८—४९॥

स्त्रीणां च न कश्चनास्य प्रयोगे वेदार्थत्यागशङ्कावकाश इति दर्शयति । इदं नाट्यमप्सरोभ्यो दत्वा प्रायश्चित्तं चरिष्यथेति । येन च भावलाभाद्भ-(भवल्लाभो) भविष्यति ॥५०॥

इत्यभिनवगुप्ताचार्यविरचितायां नाट्यवेदवृत्तावभिनवभारत्यां
नटशापाध्यायः षट्त्रिंशः ॥

———

1. NS. चरिष्यति ।

# नाटयशास्त्रम्

## अथ सप्तत्रिंशोऽध्यायः

कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः ।
[1]प्राप्तवान् देवराज्यं हि नयबुद्धिपराक्रमैः ॥१॥

प्रशशास तदा राज्यं देवैर्व्युष्टिमवाप्नुवन् ।
गान्धर्वं चैव नाट्यं च [2]दृष्ट्वा चिन्तामुपागमत् ॥२॥

[3]स चिन्तयित्वा मनसा कथमेष गृहे मम ।
नाट्यप्रयोगो हि भवेदिति सादर एव सन् ॥३॥

कृताञ्जलिः प्रयोगार्थं प्रोक्तवांस्तु सुरान् नृपः[4] ।
अप्सरोभिरिदं सार्धं नाट्यं भवतु मे गृहे ॥४॥

[5]प्रत्युक्तो(क्तश्च) ततो देवैर्बृहस्पतिपुरोगमैः ।
दिव्याङ्गनानां नैवेह मानुषैः सह सङ्गतिः ॥५॥

---

आकाङ्क्षाणां प्रशमनविधेः पूर्वभावावधीतां
धाराप्राप्तस्तुतिगुरुगिरां गुह्यतत्त्वं प्रतिष्ठा ।
ऊर्ध्वाधध्यः(धो यः) परभुवि(च) वा यत् समानं चकास्ति
प्रोद्यानन्तं तदहमधुनाऽनुत्तरं धाम वन्दे ॥

अथ यद्वशान्नाट्यशास्त्रमुपादेयं तदुपदेशसम्भवमूलभूयिष्ठभूतं भूलोकावतरणं नाट्यस्येतिहासेन प्रदर्शयन्नितिहासोपजन्न(न्य)त्वाद् गूढत्वेनोपदेशरूपस्य सारभागस्य तत्त्वस्य कथनाद् गुह्यतत्त्वकथनमध्यायमारभते । कस्यचित्त्वथ कालस्य नहुष इति ॥१॥

कालेन प्रयुक्तो यतो देवराज्यं चकार ततस्तत्सम्बन्धित्वेनोक्तं गान्धर्वमिति । नृत्तं नाट्यं स्वर्गे दृष्ट्वा वद्धमिति श्लिष्टम् । तेनाप्सरस एवमन्येऽवतरन्त्वित्यर्थः ॥२॥३—६॥

---

१. NS. प्राप्तं वा देवराज्यं ।

२. NS. इष्टां ।

३. NS. इष्टचिन्तासु KSS. varies.

४. NS. सुपुरान् नृपः KSS. प्रोक्तवानमरान् नृपः ।

५. का० पुस्तके तु अध्यायान्तमेव पाठो भिद्यते ।

हितं पथ्यं च वक्तव्यो भवान् स्वर्गाधिपो(हि यत्) ।
आचार्यास्तत्र गच्छन्तु गत्वा कुर्वन्तु ते प्रियम् ॥६॥
प्रोक्तवांस्तु ततो मां तु नृपतिः स कृताञ्जलिः ।
इदमिच्छामि भगवन् नाट्यमुर्व्यां प्रतिष्ठितम्[1] ॥७॥
पूर्वमाचार्यकं चैव भवताऽभिहितं(हि प्रति)श्रुतम्[2] ।
व्यक्तभावात्त्विदं लब्धं त्वत्सकाशाद् द्विजोत्तम ॥८॥
पितामहगृहेऽस्माकं(ऽस्माभिरे)तदन्तःपुरे जने ।
पितामहक्रियायुक्तमुर्वश्यां[3] सम्प्रवर्तितम् ॥९॥
तस्याः प्रणाशशोकेन उन्मादोपर(प)ते नृपे ।
विपन्नेऽन्तःपुरजने पुनर्नाशमुपागतम् ॥१०॥
[4]प्रकाशमेतदिच्छामो भूयस्तत् संप्रयोजितम् ।
तिथियज्ञक्रियास्वेतद् यथा स्यान् मङ्गलैः शुभैः ॥११॥
तस्मिन्(स्मान्) मम गृहे बद्धं नानाप्रकृतिसंश्रयम् ।
[5]स्त्रीणां ललितविन्यासैर्यतो नः प्रथयिष्यति ॥१२॥
तथाऽस्त्विति मया प्रोक्तो नहुषः पार्थिवस्तदा ।
सुताश्चाहूय सम्प्रोक्ता सामपूर्वं सुरैः सह ॥१३॥

---

मामिति भरतमुनिम् ॥७॥

प्रतिश्रुतमङ्गीकृतं व्यक्ततामवलम्ब्येति । व्यक्तीभूतं तु त(त्व)त्सकाशात् ॥८॥

पितामहगृहे ब्रह्मलोके यत् तदस्माभिरिति मर्त्यैरन्तःपुरजने लब्धं दृष्टं चेत्याह । पितामहक्रियायुक्तकर्मण्यां यद्ब्रह्मणा कृतं तदुर्वश्यां सत्यां सम्प्रवर्तितं पुरूरवसो गृहेऽवतीर्णम् ॥९॥

तस्याः प्रणय(या)पला(ली)यमानं स्वर्गगमनम् जातम् । स्वात्मने प्राणार्पके प्रणयिनि नृपे पुरूरवसि वि(प)ने(न्ने) योऽपि च तत्परिजनः सोऽपि विपि(प)न(न्न) इति प्राणसङ्ग(ङ्क)तं(टं) नाट्यमस्माकम् ॥१०॥११—१६॥

---

१. NS. प्रवर्तितम् ।
२. भवतो हि प्रतिश्रुतम् ।
३. पूर्वस्यां ।
४. प्रणाशमेतदिच्छामि ।
५. स्त्रीणां ललितविन्यासं प्रणाशो नाशयिष्यति ।

अयं हि नहुषो राजा याचते नः कृताञ्जलिः ।
गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव च ॥१४॥

करिष्यामश्च शापान्तमस्मिन् सम्यक् प्रयोजिते ।
ब्राह्मणानां नृपाणां च भविष्यथ न कुत्सिताः ॥१५॥

तत्र गत्वा प्रयुज्यन्तां(ध्वं)प्रयोगान् वसुधातले ।
न शक्यं चान्यथा कर्तुं वचनं पार्थिवस्य हि ॥१६॥

अस्माकं चैव सर्वेषां नहुषस्य महात्मनः ।
आत्मो(प्तो)पदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा ॥१७॥

शेषमुत्तरतन्त्रेण कोहलस्तु करिष्यति ।
प्रयोगः(गान्)कारिकाश्चैव निरुक्तानि तथैव च ॥१८॥

अप्सरोभिरिदं सार्धं क्रीडनीयकहेतुकम् ।
अधिष्ठितं मया स्वर्गे स्वातिना नारदेन च ॥१९॥

ततश्च वसुधां गत्वा नहुषस्य गृहे द्विजाः ।
स्त्रीणां प्रयोगं बहुधा बद्धवन्तो यथाक्रमम् ॥२०॥

अत्रोपभोगतस्ते तु मानुषीषु मामात्मजाः ।
बद्धवन्तोऽधिकस्नेहं तासु तद् द्विजसत्तमाः (तेषु तेषु द्विजोत्तमाः) ॥२१॥

पुत्रानुत्पाद्य वध्वा च प्रयोगं च यथाक्रमम् ।
ब्रह्मणा समनुज्ञाताः प्राप्ताः स्वर्गं पुनः सुताः ॥२२॥

एवमुर्वीतले नाट्यं शिष्यैः समवतारितम् ।
भरतानां च वंशोऽयं भविष्यं च प्रवर्तितः ॥२३॥

---

प्रयोज्यत्वेन वाद्यं(नाट्यं) ब्रह्मणैवोक्तमित्यलङ्घ्योऽयमिति भाव इति शेषः ॥१७॥

कोहल इति । यदस्माभिर्लोकानुमानादिसिद्धत्वे नोक्तं निमित्त इति ॥१८॥

उत्सर्गे तु नोपदेशफलमपि तु क्रीडनीयकहेतुकम् । रसचर्वणापात्रसारमननुवृत्या विभावानुभावनभागगते कर्मफलसम्बन्धावबोधविश्रान्त······तत्र भरतश्चापि । नारदैर(देना)प्सरोभिश्चाधिष्ठितं परिरक्षितम् ॥१९—२०॥

तेषु तेष्विति लीलादिषु । द्विजोत्तमा इत्यत्र पूर्वभोगत्वात् तावदेव प्रीताः ॥२१—२२॥

शिष्यैर्भरतसुतैः ॥२३॥

कोहलादिभिरेवं तु वत्सशाण्डिल्यधूर्तितैः ।
मर्त्यधर्मक्रियायुक्तैः कश्चित्कालमवस्थितैः[1] ॥२४॥

एतच्छास्त्रं प्रणीतं हि नाराणां बुद्धिवर्धनम् ।
त्रैलोक्यस्य क्रियोपेतं सर्वशास्त्रनिदर्शनम् ।
मङ्गल्यं ललितं चैव ब्रह्मणो वदनोद्भवम् ॥२५॥

य इदं श्रुणुयान् नित्यं प्रोक्तं चेदं स्वयम्भुवा ।
कुर्यात् प्रयोगं यश्चैवमथवाऽधीतवान् नरः ॥२६॥
या गतिर्वेदविदुषां या गतिर्यज्ञकारिणाम् ।
या गतिर्दानशीलानां तां गतिं प्राप्नुयाद्धि सः ॥२७॥
दानधर्मेषु सर्वेषु कीर्त्यते तु महत् फलम् ।
प्रेक्षणीयप्रदानं हि सर्वदानेषु शस्यते ॥२८॥

न तथा गन्धमाल्येन देवास्तुष्यन्ति पूजिताः ।
यथा नाट्प्रयोगस्थैर्नित्यं तुष्यन्ति मङ्गलैः ॥२९॥

गान्धर्वं चेह नाट्यं च यः सम्यक् परि(म्यगनु)पालयेत् ।
स ईश्वरगणेशानां लभते सद्गतिं पराम् ॥३०॥

एवं नाट्यप्रयोगे बहुविधिविहितं कर्मशास्त्रं प्रणीतं ।
नोक्तं यच्चात्र लोकादनुकृतिकरणात् । संविभाव्यं तु तज्ज्ञैः ॥
किं चान्यत् सम्प्रपूर्णा भवतु वसुमती नष्टदुर्भिक्षरोगा ।
शान्तिर्गोब्राह्मणानां भवतु नरपतिः पातु पृथ्वीं समग्राम् ॥३१॥

[इति भरतीये नाट्यशास्त्रे गुह्यतत्त्वकथनाध्यायः सप्तत्रिंशः ॥]

नाट्यशास्त्रम् संपूर्णम् ॥

---

कोहलादिभिरिति । तत्प्रधानैः सर्वशास्त्रनिवन्धनदर्शनमितिहासपुराणार्थवादकार्यचित्रपुस्तलेपादिभिः ॥२४॥

सर्वं नाट्यस्यांशाः सर्वत्र रसप्राधान्यात् साक्षात्कारकल्पवुद्धिसम्पादनात् प्राव(वी)ण्याच्च । यथोक्तं ते विहितेर्ष्यामित्यादि । सन्तो(तो)बुद्धिविषयान् प्रकाशयन्तीति ॥२५॥२६—२९॥

गान्धर्वमिति । नृत्यं नाट्यं योऽनुपालयेत् । उपदेशव्याख्यानविवरणादिना च । ईश्वरगणेशतां(शानां)लभन्ते(ते) सद्गतिं परामिति शिवसायुज्यम् ॥३०॥

अनुयायिताकरणमनुकृतिः नरपतिरिति । पुरुषोत्तम ईश्वरः सकलजगत्पालयिता । इति शिवम् ॥३१॥

---

१. NS. किं चेच्छालमवस्थितैः ।

श्रीमध्यदेशभवविप्रवरातिगुप्त-
वंशोत्थितः शिवपदार्पितचित्तवृत्तिः ॥

(संगीत) रागनयशृङ्खल (सु) प्रसिद्धो
वंशोद्भवस्थितिवशात्तनृसिंहगुप्तः ॥१॥

तस्यात्मजोऽभिनवगुप्तपदाभिधानो
भट्टेन्दुरात्मपदपांसुपवित्रमूर्तिः ॥

सद्विप्रतातवदनाधिगम्य नाट्य-
वेदं व्यधत्त विवृतिं लघुमर्थपूर्णाम् ॥२॥

शिवपुरविजयहेतुविजयादिकरुद्रसहस्रपूतया
प्रवरपुराभिधानकाश्मीरकधानशुभे वितस्तया ॥

अधिगतजन्मवसतिस्मृतकरशेखरभक्तिसक्तितो
रचयति नाट्यवेदविवृतिं लघुमभिनवगुप्तभारतीम् ॥३॥

प्रभुः शम्भुर्यस्य प्रथितपरमार्थं स्थितिसुखः
पराधीनश्चेतो व्यधित स तदाराजं(ध)नविधौ ॥

ततः शस्तस्वान्तरहृदयविश्रान्तिकृतिनः
कृतिं तस्येत्थं भोः शृणुत भगवन्तः सहृदयाः ॥४॥

सज्जनान् कविरसौ न याचते
ह्लादनाय शशभृत् किमर्थितः ॥

नापि निन्दति खलान् मुहुर्मुहु-
र्धिक्कृतोऽपि न हि शीतलोऽनलः ॥५॥

नाट्यार्थप्रथनात् तस्मात् तुष्ट(ष्टो) नाट्ये परेण यत् ।
क्रियात् तेनैष जनतामानन्दोल्लाससुन्दराम् ॥६॥

इति महामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदवृत्ता-
वभिनवभारत्यां गुह्यतत्त्वकथनं सप्तत्रिंशः ॥

॥समाप्ता चेयमभिनवगुप्तकृतिः ॥

---

# APPENDIX I

## Index of half verses of the Natyasastra, Vol. IV

---


वेद वेदांग विद्यालय

Parimal Sanskrit Series No. 11

# RĀMĀYAṆA
## OF
## VĀLMĪKI

WITH THE COMMENTARIES

TILAKA OF RAMA, RAMAYANASIROMANI OF SIVASAHAYA

AND BHUSANA OF GOVINDARAJA

EDITED BY

SHASTRI SHRINIVAS KATTI MUDHOLKAR

*Includes an exhaustive introduction*
*and Index of verses*

*BY*

SATKARI MUKHOPADHYAYA

Complete in 8 volumes
Crown 4 to Cloth pp. 3400 opp
Delux Edition 1500-00 per set
Ordinary Edition 995-00 per set

**PARIMAL PUBLICATIONS**
Oriental Publishers & Book-Sellers
DELHI - AHMEDABAD